# MANMATHAVIJAYA

A

DRAMA

BY

VENAKTARÁGHAVÁCHÁRYA

SANSKRIT PANDIT S. P. G. COLLEGE TRICHINOPOLY.

EDITED WITH NOTES

BY

THE AUTHOR.



BOMBAY

PRINTED AT THE "NIRNAYA-SAGARA" PRESS.

1888.

*Price* 12 *Annas.*

ॐ

श्रियै नमः ।

श्रीमते हयग्रीवाय नमः ।

# मन्मथविजयाख्यं नाटकम् ।



इदं त्रिशीर्षनगर एस्. पी. जी. महापाठशाला
संस्कृतप्रधानपण्डितेन

श्रीरङ्गनायिकाष्टप्रासमञ्जर्यादेः प्रबन्धयित्रा श्रीरङ्गनगरप्रथमगृहश्रीनिवासताताचार्यनडादुर्सुन्दराचार्यकृपापात्रेण

वेङ्कटराघवाचार्येण

विरचितम् ।

विषमपदटीकासहितं

मेलप्पालयंनडादुर्वात्स्यश्रीरङ्गराजाचार्यादिभिः
पण्डितप्रवरैः संस्कृतम् ।

मुम्बानगरे
निर्णयसागरमुद्राक्षरशालायां मुद्रितं विजयतेतराम् ।

कला: १२

TO

# Dr. GUSTAV OPPERT, MA., PH. D.

PROFESSOR OF ORIENTAL LANGUAGES
AND COMPARATIVE PHILOLOGY;
PRESIDENCY COLLEGE,
MADRAS.

**This little Volume is respectfully dedicated by**

**THE AUTHOR.**

मेड्रास् प्रसिडेन्सी काले‌ज् संस्कृत प्रधान पण्डितेभ्यः
श्री गस्तव् आपर्ड्भ्यः समर्पितम्.

In publishing this book I pay my hearty thanks to the Honourable A. Seshiah Sastriar, C. S. I., Dewan Regent of Pudukotah, to Dr. Gustav Oppert and other gentlemen, for the assistance they have given in enabling me to bring it to light.

My thanks are due to my Printers who have executed the work with the neatness which characterises all work that they turn out of their Press.

श्रीः

# एतन्नाटकस्थनीतयः ॥

अवनितलनिविष्टशिरसो वेङ्कटराघवाचार्यस्य ममेदं विज्ञापनं विदाङ्कुर्वन्तु पण्डितप्रवराः, इह खलु जगति संसृतिपथमवतीर्णानां अखिलानामपि मनुजानां भवति हि विवेकः श्रेयःसाधनं स च भवति विवेको बालानां अनवरतपरिशीलनात्तादृशप्रबन्धानां सततमपि महतामुपसर्पणाच्च अतो विपुलज्ञानवतां महर्षीणामाशयानुरोधेन यथाशक्ति यथास्वानुभवं च ललितपदविरचितरसिकजनहृदयङ्गममन्मथविजयाह्वयेन अनेन नूतनेन नाटकेन अङ्कपञ्चकपरिमितेन अन्वयव्यतिरेकाभ्यां काश्चन नीतयः प्रतिपादिताः । तथा हि निरहङ्कारस्य क्रोधरहितस्य निष्पक्षपातस्य भवति च यशसा सह फलप्राप्तिः दितरस्येतरा च सत्या अपि कदाचिदुल्लङ्घितभर्तृशासनाया झडिति भवति विपत्तिः "सत्यामपि विपत्तौ हृदयविजृम्भितभर्तृप्रेमभरितायाः जननान्तरेऽपि पुनरपि भवति शुभसम्प्राप्तिः" "दृढतरव्यवसायिनः ध्रुवमेव भवति श्रेयःसमृद्धिः" "नरस्य लघिष्ठतामापादयति स्वश्लाघनम्" "उत्कृष्टस्यापि असकृदेव भवति अवमतिः सर्वत्र निजसमुदाचारस्खलनात्" "मन्दमतिना न ज्ञायते महतो माहात्म्यम्" "भवन्ति च बहवोऽन्तरायाः सत्कर्मणः" "महतो वचनमनुसरतः सत्स्वपि बहुष्वन्तरायेषु क्षिप्रं भवत्यभीष्टसिद्धिः" "राज्ञः कृते विमुञ्चतोऽपि प्राणान् यशसा सह शुभोदर्कमेव भवति हि जन्म" "वर्तमानैरपि संसृतौ असक्तैरेव भवितव्यम्" "दृप्तस्य भवति दर्पभङ्गः" "सर्वैरपि पुरुषैः स्वायत्तकामैर्भवितव्यम्" "भगवन्तं ध्यायतो भवति हि न चिरादेवाभिलषितसिद्धिः" किंच अन्याश्च काश्चन नीतयो यथासम्भवमूहनीयाः ॥

स्खलद्गतिरपि स्वैरं मम वाणी विजृम्भताम् ।
गङ्गेव विष्णुपादाब्जगामिनी भवलालिता ॥

---

ॐ तत्सत्

# उपोद्घातः ।



अत्रेदं विदाङ्कुर्वन्तु पण्डितप्रवराः श्रीमतो भगवतः कृपया त्रत्यानां बहूनां माणवकानां अभ्यर्थनेन मत्सदृशानामुपाध्या विश्वासेन च मयेदं मन्मथविजयाख्यं नाटकं निरमायि । इ नाटकं नव्यमप्यनुमोदायैव भवेत् पण्डितप्रवराणामिति तर्कया ते खलु गृह्णन्ति दोषमिश्रानपि गुणानेव हंसा इव पार्थक्येन जर श्राण्यपि क्षीराणि । किञ्च । नहि नव्यमित्येवानादरणीयं भवति च कालिदासः । पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमि द्यम् । सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धि इति । अस्य च नाटकस्य मन्मथविजयाभिधानं केनचित्प्रकारे ख्यतया शम्भुकर्त्तृकस्य प्रकारान्तरेण मन्मथकर्त्तृकस्य च विज सत्वात् चमत्कारलाभायेत्यवगन्तव्यम् । अस्य तु मुद्रणे पुदु राजप्रतिनिधिश्रीशेषशास्त्रिप्रभृतिभिरनेकैरुपकृतं मुद्रणशोधने प्रसिडन्सी कालेजीसंस्कृतप्रधानोपाध्यायाः डाकूटरापर्डभिधाना पकारमकार्षुः ।

श्रीमते हयग्रीवाय नमः ॥

## विद्वदभिप्रायाः ।

(1) श्रीमदप्पयदीक्षितवंश्यानां मन्नारकुड्यपरपर्यायचम्पकारण्यक्षेत्रवास्तव्यानां महामहोपाध्यायानां श्रीराजुशास्त्र्यपरपर्यायत्यागराजाध्वरीन्द्राणां अभिप्रायः—

श्रीमद्वेङ्कटराघवार्यकविना यन्निर्मितं नाटकं
माहात्म्यं किल धूर्जटेः प्रकटयत् सूक्तैः सुधास्यन्दिभिः ।
आद्रत्यं रसवित्तमैः कविवरैर्व्याकृत्यभिज्ञैस्तथा
दृष्ट्वा मन्मथनिर्जयाभिधमिदं मोमुद्यते मन्मनः ॥ १ ॥

(2) नाहैग्रामनिवासिनोः शिरुकलत्तुरामस्वामिशास्त्रिसुब्रह्मण्यशास्त्रिणोः—

इदं नाटकमद्वन्द्वं रसभावगुणान्वितम् ।
श्रीमन्मथजयाभिख्यं योगीन्द्रहृदयङ्गमम् ॥ १ ॥

(3) मेड्रास्प्रेसिडेन्सीकालेज् संस्कृतप्रधानपण्डितानां श्रीगस्तव आपर्डभिधानानाम् ।

वेङ्कटराघवरचितं सरसालङ्कारभावगुणगुम्भम् ।
अविकलमङ्गैरखिलैर्मन्मथविजयाख्यनाटकं हृद्यम् ॥ १ ॥
मद्रास्प्रेसिडेन्सिकालेज् संस्कृतप्रवेसरद्ययः ।
गुस्तवप्पर्डहं तोषादुररीचर्करीमि तत् ॥ २ ॥

Dear Sir,

I have perused with much interest your dramatic poem, which you kindly forwarded to me, when still in proofsheets.

The subject of your drama which is known to us in another form by the work of the greatest Sanskrit poet, has received at your hands a very pleasant treatment. You have proved that your command

of the Sanskrit language with its intricate rhetoric ornaments is superior. I trust that you will obtain all the success and honor, to which your meritorious work entitles you.

Yours truly,

GUSTAV OPPERT.

MADRASS CLUB,

*24th November 1887.*

(4) मेड्रास्प्रसिडेन्सीकालेज् संस्कृतपण्डितानां श्रीशैलकोटिकन्याप्रदानलक्ष्मीकुमारतातार्यवंश्यानां विद्वत्कविवरवावदूकशतावधानयाजुषघनपाठिनां तातदेशिकताताचार्याणाम्—

श्रुत्वा श्रोत्रपरम्परापरिगतान्श्लोकान्मनोहारिणः
सारल्यात्कतिचित्तु मन्मथजयाभिख्ये नवे नाटके ।
प्रागित्थं निरणायि बाणभवभूत्याद्येषु कश्चिद्वरः
स्यादस्यापि कविर्न चाद्यतन इत्यस्माभिरेवान्तरे ॥ १ ॥

विख्याता त्रिशिरःपुरी तिरिशिराप्पल्लीति तत्रोर्जितं
विद्यामन्दिरमस्ति सुन्दरतरं एस् पी जि कालेजिति ।
तस्मिन्वेङ्कटराघवार्य इति यो गीर्वाणभाषागुरुः
सोऽयं तत्किल नाटकं व्यतनुतेत्याकर्ण्य विस्मीयते ॥ २ ॥

(5) मेलप्पालयमग्रहारवासिनां नडादूरभिजनानां वात्स्यश्रीरङ्गराजाचार्याणाम्—

ज्ञातारो विरलाः कृतिश्च सुतरां दूरे च तद्भाषितम्
सन्दर्भस्य तु का कथा सुविहिता यस्मिन् रसानां गतिः ।
कालेऽस्मिन् प्रविभक्तसन्धिसरसं श्लिष्यत्पदं नाटकं
नव्यं वेङ्कटराघवार्यरचितं ग्राह्यं गुणग्राहिभिः ॥ ३ ॥

* * * * * * * *

(6) मेलप्पालयं नडादूर् वेङ्कटाचार्याणाम्—

शुद्धां वेङ्कटराघवार्यविदुषस्सूक्तिं सुमत्यादृतां
दूरापास्तसुधारसां शुभगुणालङ्कारवृत्त्यन्विताम् ।
तज्जिह्वाञ्चललास्यकेलिषु सदा सक्ताशयाया गिरा-
मीश्वर्या मणिनूपुरस्य सुभगां शिञ्जावलिं मन्महे ॥

(7) कारत्तूरशिन्नप्पाशास्त्रिणाम्—

श्रीमद्भिर्विरचय्य प्रापितं मन्मथविजयाभिधानं नाटकं मया सम्यगवलोकितम् । पात्रसंविधानं कथासन्दर्भः गद्यपद्यरूपाणि वाक्यानि च सर्वं समीचीनं भवति ।

(8) श्रीरङ्गस्थानां नडादूरसुन्दरराजाचार्याणाम्—

वेङ्कटराघवसुधिया मन्मथविजयाख्यनाटकं रचितम् ।
श्लाघाधुतमृडमकुटीफणिमणिनीराजितं चकास्त्यनवम् ॥

(9) सन्निहित श्रीनारायणपुरवास्तव्यनरसिंहाचार्याणाम्—

श्रीमन्मथजयो नूत्नमनन्तसत्त्वभूषणम् ।
विबुधानां मनोहारि रत्नं विजयतेतराम् ॥

(10) नावल्पाक्कम्नरसिंहाचार्याणाम्—

वेङ्कटराघवविद्वत्परिवृढरचितोऽद्य पञ्चबाणजयः ।
विलसति विद्वत्प्रीतिं विदधद् व्युत्पित्सुभाग्यपरिपाकः

* * * * * * * *

(11) सेन्ट्जोसफ्कालेज्द्वितीयसंस्कृतपण्डितानां शठकोपाचार्याणाम्—

सुललितपदयोगा स्निग्धगम्भीरभावा
नवरसपरिजुष्टा कालिदासस्य वाणी ।
चिरमुपरतनाथा नाथवत्यद्य जाता
कविवरमणिनैतद्ग्रन्थकर्त्रा गृहीता ॥

(12) पुदुक्कोट्टैकालेज्संस्कृतपण्डितानां स्वामिशास्त्रिणाम्—

ओजास्विसप्रसादं श्लोकैरमणीयरीतिभिर्युक्तम् ।
मन्मथविजयाख्यमिदं मन्मथविजयीव सन्ततं भाति ॥

* * * * * * * *

(13) कोट्टूररङ्गस्वामिवर्याणाम्—

रसालङ्काररीत्यर्थमाधुर्यौज्ज्वल्यशालिनी ।
वेङ्कटेशार्यवाल्मीकिरचिता कवितामला ॥

(14) सेन्ट्जोसप्कालेज्प्रधानसंस्कृतपण्डितानां कस्तूरिरङ्गाचार्याणाम्—

सुविहितरससन्दर्भं सुश्लिष्यत्पदमसक्तमन्ध्यङ्गम् ।
वेङ्कटराघवविदुषा जयतितरां नाटकं समभिक्लृप्तम् ॥

---

॥ ॐ श्रीमते हयग्रीवाय नमः ॥

# अथ

# मन्मथविजयः ।

श्रीमच्चारु हयाननस्य चरणद्वन्द्वं बहुश्रेयसे
वोभूयात्कमलासखस्य नृहरेः पादाब्जयुग्मं च नः ।
यत्सेवावशतः प्रबोधजलधिस्फारोल्लसद्वीचिका-
डोलाक्रीडनपारवश्यमसकृद्धत्ते सुधीमानसम् ॥ १ ॥
भूयात्तत्तरुणेन्दुशेखरपदद्वन्द्वं सतां भूतये
यद्ध्यानाद्धृदये निरस्ततमसां योगीश्वराणां सदा ।
शश्वत्सारसवासिनीसहचरो दृप्तस्य दर्पापहः
फुल्लत्पङ्कजलोचनश्च पुरतः प्रादुर्भवत्यञ्जसा ॥ २ ॥

( नान्द्यन्ते । )

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य । ) आर्ये, यदि निर्वृत्तपरिकर्मविधानासि, तर्ह्यभिलषामि तत्रभवत्या आगमनम् ।

**नटी**—( प्रविश्य मुखमवलोक्य सस्मितम् । ) किं ति[1] झडिइ मउलिअकमलंविअ विसोहं दीसइ अज्जउत्तस्स वअणं ता तक्केमि गुरुअरविआरभरिओ अज्जउत्तो त्ति ।

**सूत्रधारः**—किं कथ्यते विचारभर इति । इह खलु उभयतः परिस्पन्दमानसह्यजासलिलतरङ्गसंस्पर्शशिशिरतरपवमानपरिचालितकुसुमभरभरितघुमघुमितनववनवलतिकामतल्लिकापरिमण्डितोपकण्ठे श्रीभूलोकवैकुण्ठे, नानादेशसमागतविविधविद्यानिपुणमनीषिगणसमलङ्कृते सन्ततसन्तन्यमाननिरतिशयमहोत्सवोत्तुङ्गे

---

[1] किमिति झडिति मुकुलितकमलमिव विशोभं दृश्यते आर्यपुत्रस्य वदनं, तत् तर्कयामि गुरुतरविचारभरित आर्यपुत्र इति ।

श्रीरङ्गे, सततसञ्चरणपवित्रितभुवनमण्डलविस्तारान् सभास्तारान्, अनवरतपरिचितनिखिलशास्त्रपरिमृदुलितहृदयान् सहृदयान्, सन्निहितश्रीनारायणपुरवास्तव्यश्रीवेङ्कटराघवाचार्यग्रथितवस्तुना नवेन मन्मथविजयाह्वयेन नाटकेन आरिराधयिपुरहं बिभेमि कथं तदाराधनं भवेदिति ।

**नटी**—णं खु अह्मारिसाणं उव्वेअकालणं अत्थि किं वि जदो सुसिक्खिदप्पओआ वअं इअं अ सहा होइ गुणग्गाहिणी ।

**सूत्र०**—आर्ये, यद्यप्येवं तथापि नास्माकं निर्णयमधिगच्छति चेतः, यतः तेनैव कविना एवमभ्यर्थितम् ।

भो विद्वन्मणयः कृपां कुरुत मे युष्मानहं प्रार्थये
 नूत्नं नाटकमद्य मन्मथजयाभिख्यं मया निर्मितम् ।
भावालङ्कृतिवर्जितं रसलवैः शून्यं स्वयं यद्यपि
 स्वादुत्वं व्रजति ध्रुवं यदि कृपावीक्षामृतैः सिच्यते ॥ ३ ॥

**नटी**—को उण एसो कई जो अआलजलदो विअ अह्मासु किआदरो होइ ।

**सूत्र०**—आर्ये, किमु वक्तव्यम् ? शृणु ।

श्रीमत्कौशिकवंशमौक्तिकमणी रङ्गेशवर्यात्मजः
 पित्रोस्तुल्यगुणाभिधानचरितैरुल्लासिनोः सादरः ।
सर्वेष्वेव समस्तपस्यतिरुचिर्भक्तो रमावल्लभे
 मोक्षासक्तमनाश्च शान्तिनिलयश्चित्रं जगत्पश्यति ॥ ४ ॥
वात्स्यश्रीरङ्गराजार्यलक्ष्मीनृहरिसूरिणः ।
ग्राहयन्ति स्म विद्यासु कौशलं कृपयान्विताः ॥ ५ ॥

---

१. न खलु अस्मादृशानां उद्वेगकारणं अस्ति । किमपि यतः सुशिक्षितप्रयोगा वयं इयं च सभा भवति गुणग्राहिणी ।

२. कः पुनरेष कविः । यः अकालजलद इव अस्मासु कृतादरो भवति ।

---

तुल्याः सदृशाः गुणाः सौशील्यादयः अभिधाने रङ्गस्वाम्यार्यरङ्गनायिकाख्ये चरितानि सुचरित्राणि तैः ।

अलमतिविस्तरेण प्रकृतमनुसरामः उत्कण्ठिताहीयं परिषत् तदाराध्यतां मधुरमञ्जुलगीतिविशेषेण, सम्प्रति हि ।

उत्फुल्लपङ्कजवनीमभितो भ्रमन्तो
झङ्कारपूरितदिशो मधुपाश्चरन्ति ।
मन्दानिलश्च लतिकानवनाट्यशिक्षा-
दक्षो वहत्यतितरां रुचिरो वसन्तः ॥ ६ ॥

नटी—

मउलिअतणूरुहाओ किसलयरससादकेलिभरिआओ ।
कूअन्दि कोइलाओ काणणसहआरसाहिणिलआओ ॥ ७ ॥

( नेपथ्ये । )

अये शैलूषापशद, कोऽयं वसन्तः अस्मत्स्वामिपरिपन्थिनः कामस्य सुहृदं वृथा स्तवीषि । पश्य रे ।

यद्भ्रूभङ्गनिरीक्षणं सकृदपि प्राप्तं जगद्दह्यते
कल्पेऽनल्पविसृत्वरोज्ज्वलचलज्ज्वालावृतेनाग्निना ।
यद्धस्तस्फुरदद्रिचापविगलद्बाणानलेऽभूद्धविः
पूर्वं तत् त्रिपुरं स तेन हतकः कामः परं स्पर्धते ॥ ८ ॥

सूत्र०—आर्ये, अस्मत्संछापश्रवणकुपितः चकोरलोचनः इत एवागच्छति तर्हि अन्यत्र गच्छावः ( इति नटीसूत्रधारौ ससम्भ्रमं निष्क्रान्तौ । )

## प्रस्तावना ।

( प्रविश्य । पटाक्षेपेण कुपितः )

**चकोरलोचनः**—( सक्रोधं । पुनर्यद्भ्रूभङ्गेति पठित्वा. ) पश्य रे शैलूषापशद,

विकटजटिलजूटाबद्धगङ्गाप्रवाहा-
दसकृदधिकभीत्यानम्रवैवस्वताच्च ।

---

मुकुलिततनूरुहाः किसलयरसास्वादकेलिभरिताः ।
कूजन्ति कोकिलाः काननसहकारशाखिनिलयाः ॥ ७ ॥

मथितजलधिमध्यात्पीतहालाहलाब्धिक्
कथमितरमिदानीं क्षुद्रकीटं स्तवीषि ॥ ९ ॥

( नेपथ्ये । )

मा कुप्यतु मा कुप्यतु भवान् सर्वेषामपि शैलूषाणां सामाजिकहृद्-यतोषणमेव गुरुतरं भवति न पुनः प्रबलदुर्बलवैरित्वविचारः ।

**चकोर०**—( साटोपं परिक्रम्य । स्वगतम् ।) अये, मम सुहृदः विकटव-क्रस्यैव ध्वनिः श्रूयते तर्हि इत एव आव्हयामि । ( प्रकाशम् । सोल्लासम् ।) अये, विकटवक्र, इत आगम्यताम् ।

**विकटवक्रः**—( प्रविश्य । स्वगतम् । ) नास्ति मित्रसंल्लापादन्यत् किमपि हृदयसुखकारणं रसिकजनस्य । ( प्रकाशम् । सौत्सुक्यम् । ) भो चकोरलोचन, चिरस्य कालस्य तव दर्शनेन विना उत्कण्ठितोऽस्मि संवृत्तः तत्कथय एतावन्तं कालं कुत्र गतो भवान् ।

**चकोर०**—किं न ज्ञायते भवता ।

अस्मत्स्वामिपराभवाय विहिते यज्ञे पुनर्वैष्णवे
द्रष्टुं कर्म तदद्भुतं गतवती दाक्षायणी संभ्रमात् ।
मातुः पादयुगं प्रणम्य च पितुः पार्श्वं गतापि स्वयं
क्रोधाविष्टहृदा यदा न गणिता खिन्ना विषण्णाप्यभूत्॥१०॥

**विकट०**—ततस्ततः ।

**चकोर०**—

सदसि झडिति मौनं प्राप्य सर्वे तदास्याः
पितुरपि च मुखं ते वीक्षमाणाश्च तस्थुः ।
तदनु कलुषचेता दक्ष एवं बभाषे
करमृदितकरः सन् क्रोधसंरक्तनेत्रः ॥ ११ ॥

**विकट०**—किमिति ।

**चकोर०**—पुत्रि, न मेऽस्ति किंचिद्भवत्या कृत्यमत्र यथेच्छं गम्यतां न त्वामहं निरीक्षितुमपि शक्नोमि । पश्य ।

यदसि विषमनेत्रे कृत्तिवासस्यजस्त्रं
प्रमथगणसनाथे पञ्चवक्त्रेऽतिरौद्रे ।
कलितभुजगभूषे क्लृप्तवासे श्मशाने
हविरिव शुनि मोहादर्पिता हन्त पुत्रि ॥ १२ ॥

विकट०—ततः किं प्रतिपन्नं तया ।

चकोर०—( कर्णे एवमिव ।)

विकट०—( सविषादम् । ) किमेतदस्माकं स्वामिनः कर्णगोचरं गतं न वा ।

चकोर०—श्रोष्यति च संप्रति प्रतिविधास्यति च । अहमप्याज्ञप्तः चकोरलोचन चिरायते मे वत्सः मायामयः षण्मुखः तद् द्रुततरं गत्वा जानीहि किं प्रतिपद्यते वत्स इति तद्गत्वा विज्ञापयामि तदुदन्तं त्वं पुनः कुत्र प्रस्थितोऽसि ।

विकट०—अहं तावन्नारायणस्य निकटं प्रेषितोऽस्मि किं दक्षमखाय स गमिष्यति न वेति ज्ञातुम् ।

चकोर०—किमवगतं भवता ।

विकट०—मया पृष्टेन तेन च भणितं नाहं तत्र गमिष्यामि यतो मित्रपरिभावी भवति स दक्ष इति ।

चकोर०—युक्तमेवैतत् मित्रमित्येव न वस्तुतो न कश्चिदस्ति भेदस्त्रयाणां हरिहरब्रह्मणां पश्यैकस्यैव हेम्नो भवति व्यवहारः कटककुण्डलग्रैवेयकाणीति । तथाहि तेनैवोक्तं श्रीभागवते प्रभविष्णुना विष्णुना ।

" आत्ममायां पुरस्कृत्य सोऽहं गुणमयीं द्विज ।
सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ १३ ॥
तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि ।
ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥ १४ ॥ " इति ।

अलमलमनया प्रसक्तानुप्रसक्त्या स्वस्वनियोगवर्तिनौ भवाव इति (परिक्रम्य निष्क्रान्तौ । )

मथितजलधिमध्यात्पीतहालाहलाद्धिक्
कथमितरमिदानीं क्षुद्रकीटं स्तवीषि ॥ ९ ॥

( नेपथ्ये । )

मा कुप्यतु मा कुप्यतु भवान् सर्वेषामपि शैलूषाणां सामाजिकहृद्यतोषणमेव गुरुतरं भवति न पुनः प्रबलदुर्बलवैरित्वविचारः ।

**चकोर०**—( साटोपं परिक्रम्य । स्वगतम् । ) अये, मम सुहृदः विकटवक्रस्येव ध्वनिः श्रूयते तर्हि इत एव आह्वयामि । ( प्रकाशम् । सोल्लासम् । ) अये, विकटवक्र, इत आगम्यताम् ।

**विकटवक्रः**—( प्रविश्य । स्वगतम् । ) नास्ति मित्रसंल्लापादन्यत् किमपि हृदयसुखकारणं रसिकजनस्य । ( प्रकाशम् । सौत्सुक्यम् । ) भो चकोरलोचन, चिरस्य कालस्य तव दर्शनेन विना उत्कण्ठितोऽस्मि संवृत्तः तत्कथय एतावन्तं कालं कुत्र गतो भवान् ।

**चकोर०**—किं न ज्ञायते भवता ।

अस्मत्स्वामिपराभवाय विहिते यज्ञे पुनर्वैष्णवे
द्रष्टुं कर्म तदद्भुतं गतवती दाक्षायणी संभ्रमात् ।
मातुः पादयुगं प्रणम्य च पितुः पार्श्वं गतापि स्वयं
क्रोधाविष्टहृदा यदा न गणिता खिन्ना विषण्णाप्यभूत् ॥ १० ॥

**विकट०**—ततस्ततः ।

**चकोर०**—

सदसि झडिति मौनं प्राप्य सर्वे तदास्याः
पितुरपि च मुखं ते वीक्षमाणाश्च तस्थुः ।
तदनु कलुषचेता दक्ष एवं बभाषे
करमृदितकरः सन् क्रोधसंरक्तनेत्रः ॥ ११ ॥

**विकट०**—किमिति ।

**चकोर०**—पुत्रि, न मेऽस्ति किंचिद्भवत्या कृत्यमत्र यथेच्छं गम्यतां न त्वामहं निरीक्षितमपि शक्नोमि । पश्य ।

यदसि विषमनेत्रे कृत्तिवासस्यजस्त्वं
प्रमथगणसनाथे पञ्चवक्रेऽतिरौद्रे ।
कलितभुजगभूषे क्लृप्तवासे श्मशाने
हविरिव शुनि मोहादर्पिता हन्त पुत्रि ॥ १२ ॥

विकट०—ततः किं प्रतिपन्नं तया ।

चकोर०—( कर्णे एवमिव ।)

विकट०—( सविषादम् । ) किमेतदस्माकं स्वामिनः कर्णगोचरं गतं न वा ।

चकोर०—श्रोष्यति च संप्रति प्रतिविधास्यति च । अहमप्याज्ञप्तः चकोरलोचन चिरायते मे वत्सः मायामयः षण्मुखः तद् द्रुततरं गत्वा जानीहि किं प्रतिपद्यते वत्स इति तद्गत्वा विज्ञापयामि तदुदन्तं त्वं पुनः कुत्र प्रस्थितोऽसि ।

विकट०—अहं तावन्नारायणस्य निकटं प्रेषितोऽस्मि किं दक्षमखाय स गमिष्यति न वेति ज्ञातुम् ।

चकोर०—किमवगतं भवता ।

विकट०—मया पृष्टेन तेन च भणितं नाहं तत्र गमिष्यामि यतो मित्रपरिभावी भवति स दक्ष इति ।

चकोर०—युक्तमेवैतत् मित्रमित्येव न वस्तुतो न कश्चिदस्ति भेदस्त्रयाणां हरिहरब्रह्मणां पश्यैकस्यैव हेम्नो भवति व्यवहारः कटककुण्डलग्रैवेयकाणीति । तथाहि तेनैवोक्तं श्रीभागवते प्रभविष्णुना विष्णुना ।

"आत्ममायां पुरस्कृत्य सोऽहं गुणमयीं द्विज ।
सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ १३ ॥
तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि ।
ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥ १४ ॥" इति ।

अलमलमनया प्रसक्तानुप्रसक्तया स्वस्वनियोगवर्तिनौ भवाव इति (परिक्रम्य निष्क्रान्तौ । )

## शुद्धविष्कम्भः ।

( ततः प्रविशति शम्भुः । )

**शम्भुः**—( सवितर्कं सनिश्वासं च । )

यद्रोषाद् दयिता विहाय सहसा सर्वानितः क्ष्माभृतः
कैलासात्पितुरेव मन्दिरमगाद्यागेक्षणे कौतुकात् ।
स्मृत्वापि स्फुरदोष्ठगद्गदचलद्वाक्यं मृगाक्ष्या मुखं
प्रेमाधिक्यमुपागतोऽस्मि तादिमां कामस्य धिग्वक्रताम् ॥ १५ ॥

( साटोपं परिक्रम्य । आकाशे लक्ष्यं बध्वा । ) रेरे प्राजापत्यगर्वित दीक्षिताधम,

रतः कर्मण्यज्ञस्त्वमसि च वृथायासबहुलः
प्रियां पुत्रीं त्यक्त्वा कलुषहृदयोऽनागसि मयि ।
न ते वाञ्छासिद्धिर्भवति बहुधाहङ्कृतिजुषः
परीवादं लब्ध्वा जगति विततं क्रोधपरुषः ॥ १६ ॥

पश्य रे जाल्म ।

यतो भवति मे मनस्तदनुकूल एवाच्युतो
विरिञ्चिरपि मायया जगदिदं पुनर्वञ्चयते ।
न खल्विह सुधीर्भवेत् परुषभाषणात् क्रोधतो
न चापि फलमश्नुते कलुषितान्तरात्मा क्रतोः ॥ १७ ॥

कोऽत्र भोः—

( प्रविश्य प्रतीहारः । )

**प्रतीहारः**—अअंह्मि आणवेदु भट्टा । [1]

**शम्भुः**—उपवेष्टुमभिलषामि ।

**प्रती०**—सेण्णिहिदं इदं आसणं अलङ्करेदु अज्जो । [2]

**शम्भुः**—न खल्ववगच्छाम्यन्यसङ्क्रान्तहृदय इति । ( आसन उपविश्य

---

१. अयमस्मि आज्ञापयतु भर्ता ।

२. सन्निहितमिदमासनं अलङ्करोतु आर्यः ।

वामाक्षिस्पन्दनं सूचयित्वा स्वगतम्।) किं नु खलु मे हृदयं विषीदति कम्पते च गात्रम्। अहो, धिगसारः संसारः त एव भवन्ति धन्याः ये खलु शक्नुवन्त्यङ्कुशेनेव मदकरिणं निरवधिकसुखानन्ददायिना समाधिना हृदयं नियन्तुम्। तथाहि।

मनो निविशते यदा तरुणवारिजाक्ष्या मुखे
ततः पुनरपीक्षणं रहसि वाञ्छति प्रेमतः।
निरन्तरसमागमे सति निकामलग्नं चिरा-
द्वियोगमथ चेद्व्रजत्यतितरां विषीदत्यहो ॥ १८ ॥

अतो विपश्चिता जितमदनेन भवितव्यम् (प्रकाशम्।) जयन्धर, दृश्यसे किमपि प्रष्टुकाम इव।

जयन्धरः—[1]अहइं। किन्दु दासअणेण पुच्छिदव्वं ण वेत्ति कादरीभूदोह्मि।

शम्भुः—माभैषीः विस्रब्धं पृच्छ्यताम्।

जय०—[2]णं दाणवाणं वि अमरपरिपन्थीणं समब्भच्चणीओ होइ देवो ता किंति अणाहूअज्जेव सामिणं दक्खेण आरद्धो महाजण्णोत्ति।

शम्भुः—शृणु, पुरा खलु महति विश्वसृजां यज्ञे बहवो देवा मुनयश्च सदसि मिलिता बभूवुः। तत्र च आगच्छन्तं दक्षमवलोक्य सर्वे देवा महर्षयश्च उदतिष्ठन् विना हि मां ब्रह्माणं च। ततश्च ब्रह्माणं प्रणम्य समुपविष्टो दक्षः अकृतसमुदाचारं रोषकषायितनयनो मां वाग्भिरतिपरुषाभिरतर्जयत्।

जय०—किं ति[3]

शम्भुः—त्वमतिदुर्मेधाः दुर्वृत्तश्च यदसि मां सर्वैरपि पुरस्कृतं उ-

---

१. अथ किम्। किन्तु दासजनेन प्रष्टव्यं न वेति कातरीभूतोऽस्मि।

२. ननु दानवानामपि अमरपरिपन्थिनां समभ्यर्चनीयो भवति देवः तत्किमिति अनाहूयैव स्वामिनं दक्षेण आरब्धो महायज्ञ इति।

३. किमिति।

छद्मच समुदाचारं अनभ्युत्थानेनावमानितवान् अनर्हते हि भवते प्रतिपादिता मत्तनयेति ।

जय०—कुदो सामिणा अब्भुत्थाणं ण किदं जदो सो होइ पिदेव माणणीओ ससुरो ।

शम्भुः—यदा च दक्षमपश्यं तदैव मनसा सपर्यामकार्षम् ।

जय०—तेण उण कुदो ण जाणिदं ।

शम्भुः—स च बहिर्मुखः केवलमभवत् । पश्य ।

नाप्नुवन्ति ज्ञानचक्षुर्बहिर्व्याप्टतचेतसः ।
समीपस्थमिव द्रव्यं तिमिरावृतलोचनाः ॥ १९ ॥

( सदृष्टिभङ्गम् । )

कुतः कवलयदृशौ वियति विस्फुरज्ज्योतिषः
प्रभापटलमीक्ष्यते

( सविस्मयं निरूप्य । )

किमपि पूरुषव्यञ्जनम् ।

( पुनर्निरूप्य । )

अहो ! करधृताप्यसौ नदति वायुवेगात्स्वयं
यदस्य परिवादिनी भवति नारदोऽसौ ध्रुवम् ॥ २० ॥

अयमेव धन्यः । तथाहि योऽसौ ।

मधुरिपुचरणाब्जे मानसं संदधानः
करमुखरितवीणाकाकलीदत्तकर्णः ।
सततमपि च वाग्भिर्माधवं संस्तुवानो
मुकुलितनयनाब्जो मोदमत्यन्तमेति ॥ २१ ॥

---

१. कुतः स्वामिना अभ्युत्थानं न कृतं यतः स भवति पितेव माननीयः श्वशुरः ।

२. तेन पुनः कुतो न ज्ञातम् ।

---

* काकल्यां सूक्ष्मध्वनौ "काकली तु ध्वनौ सूक्ष्म इत्यमरः ।"

( ततः प्रविशति नारदः अवतरणनाटितकेन । )

एषोऽहं सततं सुरेन्द्रविजयायैवोद्यतोऽपि स्वयं
धर्माधर्मविवेचनं च रचयन् सम्बोध्य सर्वानपि ।
दैत्यानामसकृत्प्रतारणकरोऽप्यब्जेक्षणाङ्घ्रिद्वये
भक्त्या सर्वसमोऽस्मि कोऽपि च न मे कुप्यत्यसूयत्यपि २२

( सविस्मयम् । पुरतोऽवलोक्य । )

गतोऽस्म्यहं क्षितिधरशृङ्गमुन्नतं
विचित्रितं रुचिरतमैश्च धातुभिः ।
पवित्रितं हरचरणाब्जरेणुभिः
सरिच्छतै*रपि च वृतं ससैकतैः ॥ २३ ॥

अत्र हि—

शम्भोर्ध्यानादसकृदमितानन्दबाष्पार्द्रनेत्रा
निष्पन्दत्वात्करतलगलच्चारुरुद्राक्षमालाः ।
बध्वा जानुद्वयमपि चिराद्योगपट्टैर्निषण्णा
राजन्तेऽमी विततनपसो योगिनो ब्रह्मनिष्ठाः ॥ २४ ॥

एष तावच्छम्भुः केनचित्सँल्लापस्तिष्ठति तदुपसर्पाम्येनमिति ।

( उपसर्पति । )

**शम्भुः**—झडिति आसनादुत्थाय ससम्भ्रमं अर्घ्यमर्घ्यम् ।

( प्रविश्य । )

**भृङ्गिरिटः**—इदमानीतम् ।

**शम्भुः**—( आदाय स्वहस्तेनोपनयति ।)

**नारदः**—( सविनयम् । ) अनुगृहीतोऽस्मि अलमायासेन अहमेव गृह्णामि । उपविशतु भगवानिति । अर्घ्यं प्रतिगृह्णाति ।

**शम्भुः**—जयन्धर, आसनमानीयताम् ।

---

*स्सिकतचयैश्च मण्डितम् ( पा० )

**जय०**—[1]जं देवो आणवेदि ( इति नारदमवलोक्य । ) इदमासणं अलङ्करेदु अज्जो ।

( उभौ यथार्हमुपविशतः । )

**शम्भुः**—अपि कुशलं त्रिभुवनसुचरितपरीपाकस्य । अथवा ।

भवत्पदाब्जरेणूनां कणिकापि च यं स्पृशेत् ।
तस्यापि कुशलं ब्रह्मन् किमु ते सुकृतात्मनः ॥ २९ ॥

**नारदः**—भगवन्, इदानीमेव कुशली संवृत्तः यस्योपरि भगवत एवं पक्षपातः । ( उत्थाय । सविनयमञ्जलिं बध्वा । )

दण्डकः ।

जय जय हर देवदेवप्रभो, मस्तकन्यस्तसच्चन्द्रिकासंस्फुरद्रश्मिसंवेष्टितस्फीतगङ्गोल्लसद्वीचिकावातसंशीतलस्मेरवक्त्राम्बुजश्रीसमुल्लासिने—अद्रिसंवासिने,

उरसि निहितभोगिसङ्घोच्चलन्मूर्धभागोज्ज्वलद्रत्नचक्रप्रभाजालसंवीतरम्यातिगम्भीरसन्नाभिमुद्राञ्चितव्याघ्रचर्मावृतद्योतमानाङ्गसंपूर्तये—सञ्चरत्कीर्तये,

*अतिरुचिरमनोभवाद्वैततूणीरयुग्मच्छविभ्रान्तिसन्दायिजङ्घाद्वयप्रान्तसंशोभमानांशुजालावृताम्भोजसौन्दर्यलुण्टाकपादद्वयीद्योतनं भेजुषे—योगविद्याजुषे,

दृढतरशुभभक्तिमद्भक्तसङ्गीतदिव्योत्तमानेकचारित्रसंमोदभाक्चेतसानेकशोदत्तमाहात्म्यविख्यापने ह्रीमते चाष्टमूर्त्यात्मतां गच्छते ते नमस्ते नमस्ते नमः ॥

---

१. यद्देवः आज्ञापयति । इदमासनमलङ्करोत्वार्यः ।

---

* सौन्दर्यलुण्टाकी चारुताऽपहारिणी या पादद्वयी । जल्पभिक्षकुट्टलुण्टेति षाकन् प्रत्ययः ।

---

*आयत्तः ( पा० )

**शम्भुः**—यद्यस्ति भुवनसञ्चरणे किञ्चिदुपलब्धमद्भुतं तर्ह्युपविश्य निवेद्यताम् ।

**नारदः**—( स्वगतम् । ) सर्वथा संसृतेरुपरि विरक्त एव भविष्यति शम्भुः किं कर्तव्यं गरीयसी खलु भवितव्यता यद्यहं न निवेदयेयं केनापि निवेद्यत एव अधिकारश्च ममैष नारदस्य । ( प्रकाशम् । ) संवीक्ष्य दक्षाध्वरमिदानीमेव आगतोऽस्मि ।

**शम्भुः**—( सक्रोधम् । ) किं करोति स जाल्मः ।

**नारदः**—( स्वगतम् । ) प्रवर्तिता चाग्नौ घृतधारा, किंचिद्विलम्बयामि । ( प्रकाशम् । ) विश्रान्तः कथयिष्यामि ।

**शम्भुः**—जयन्धर, वीजय महर्षिम् ।

**जय०**—जं[1] देवो आणवेदि ( इति वीजयति । )

**नारदः**—आरब्धे च वैष्णवे यागे आहूतेषु च नानादेशनिवासिनृपतिमण्डलेषु समागतेषु च ब्रह्मविष्णुवर्जं निर्जरगणेषु ( सवाक्स्तम्भं विरमति । )

**शम्भुः**—( स्वगतम् । ) किमिदानीं चिरादभिलषितस्य कन्दर्पदर्पभङ्गस्य लाभो भवेत् । ( प्रकाशम् । ) विस्त्रब्धमुच्यताम् ।

**नारदः**—अनवरतहूयमानहविःसंवर्धितज्वलनज्वालाकवलिते चाम्बरतले ।

**शम्भुः**—ततस्ततः

**नारदः**—

पुरः प्रसृतरेणुभिर्मुकुलयन् दृशः पश्यतां
पदन्यसनवेगतः पतितशाखिगुल्मव्रजः ।
नदन्नभिमुखं मुहुः क्वणितकिङ्किणीकः क्षणात्
वृषः समधिकोन्नतो मखभुवं स्वयं प्राविशत् २६ ॥

**शम्भुः**—ततस्ततः

---

१. यद्देवः आज्ञापयति ।

**नारदः**—सविस्मयं सर्वैरथ निरीक्षिते च नन्दिनि ससम्भ्रममवतीर्य च तस्मात् पार्श्वद्वयेऽपि परिजनदत्तहस्तावलम्बा किञ्चिदवनतवदनारविन्दा रोषकषायितनयना च दाक्षायणी अतिपरुषवचोभिरतर्जयत्पितरम् ।

**शम्भुः**—किमिति ।

**नारदः**— "जं[1] तुए तिहुवणमहणीओवि मे णाहो किदकवालमण्डणो अत्थिमालाधारी पिदुवणनिलओ अंताअणरिहो जण्णस्सेत्ति कदुअअवमाणिदो ता तुह तणूहवो अअं देहो मे ण जोग्गो होदि पेक्खन्तस्सज्जेव तुह पुरदो मुञ्चेमि कलेवरन्ति" ।

**शम्भुः**—(स्वगतम् ।) हा धिक् किम् वक्ष्यति दक्षः (प्रकाशम्) ततस्ततः ।

**नारदः**—कुर्वाणाहृदये भवत्परिणयं लब्ध्वापि भूयो जनिम् । मेनाया जठरे ।

**शम्भुः**—(सवितर्कम् ।) ततस्ततः ।

**नारदः**—द्रुतं कृतवती *श्वासानिलापूरणम् ।

**शम्भुः**—(स्वगतम् ।) हाधिक्प्रमादः । (प्रकाशम् ।) ततस्ततः ।

**नारदः**—हाहाकारपरायणैरसकृदप्यामुक्तनेत्राश्रुभि-
स्तत्रत्यैर्विनिवारितापि

**शम्भुः**—(सहर्षम् ।) ततस्ततः ।

**नारदः**—किं करोमि मन्दभाग्यः ।

सहसा देहं व्यमुञ्चत्सती ॥ २७

---

१. यत्त्वया त्रिभुवनमहनीयोऽपि मे नाथः कृतकपालमण्डनः अस्थिमाला[illegible] पितृवननिलयश्च तदनर्हो यज्ञस्येति कृत्वाऽवमानितस्तत्तव तनूभवोऽयं देहोऽ[illegible] न योग्यो भवति प्रेक्षमाणस्यैव तव पुरतो मुञ्चाम्येनं कलेवरमिति ।

---

*प्राणानिलापूरणम् (पा०)

( शम्भुः मूर्छति । )

**जय०**—समस्ससिदु समस्ससिदु देवो ।[1]

**शम्भुः**—( समाश्वस्य । सकरुणम् । )

इतो मातुर्गेहं व्यवसितवती गन्तुमबला
मुहुः प्रत्यादिष्टा कलुषितदृशार्पितवती ।
मम स्मेरं वक्त्रं पुनरपि च वीक्ष्यैव दयिता
गता किं कुर्मो वा न च खलु विधिर्लङ्घ्यत इह ॥२८॥

( सनिश्वासं सवितर्कं च । )

प्रिये त्वद्वाक्यानि स्मितमधुरमुग्धानि च मुखम्
सरोजाभं नेत्रे समयविकचेन्दीवरनिभे ।
गतं वा हंसीभिः परिचितमयि स्मेरवदने
क्व वा लब्धव्यानि क्व च पुनरिदं जीवितसुखम् ॥ २९ ॥

( स्वगतम् । ) सर्वथा विरक्तिमेत्य ऋते च तपश्चरणान्नान्यदस्ति किञ्चित्सुखकरम् ।

( नेपथ्ये—शङ्खध्वनिः । )

**नारदः**—

अयं बधिरयन् श्रवांस्यतितरां हि दिग्दन्तिनां
प्रतिध्वनितबन्धुरो विविधकन्दराण्यन्तरा ।
वियत्यपि विशृङ्खलः पवनसाह्यतः सञ्चरन्
प्रकम्पितधरातलो भ्रमति यामशङ्खध्वनिः ॥ ३० ॥

तदनुज्ञायतां माध्यन्दिननियमाय । ( इत्युत्तिष्ठति । )

**शम्भुः**—गम्यतां यथेच्छं अहमपि दक्षमखध्वंसं विधाय तपश्चरणाय यतिष्ये । ( इत्युत्थाय आकाशे लक्ष्यं बध्वा । ) अये पाप,

ध्वस्तत्वद्यागवेदिप्रचलदतिजवाकृष्टपादार्त्विगादि
प्रस्विन्नोत्कम्प्रहस्तोद्गलितचमसयुक्स्त्रुक्स्त्रुवाकीर्णभूमौ ।

---

१. समाश्वसितु समाश्वसितु देवः ।

क्षिप्रोद्यत्खड्गधारादलितबहुसिरारक्तधारार्द्रकण्ठ-
त्वद्गात्राक्रान्तिचञ्चत्पदतलनटने प्रेरये वीरभद्रम् ॥ ३१ ॥

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

## दक्षमखनिरीक्षणं नाम प्रथमोऽङ्कः ।

## द्वितीयोऽङ्कः ॥

( ततः प्रविशति विदूषकः । )

**विदूषकः**—हीं हीं ण मे अत्थि सरिसो भुवणतलम्मि कोवि बह्मणो जेण जं बह्मणत्तणं संपादेदुं कोसिअमुणिप्पमुहा णिअमवुदकिलेसिदसरीरा गिरिणईकन्दरगुहासुं पञ्चग्गिमज्झे अ तवच्चरणतप्परा अज्ज वि होन्ति तारिसं बह्मणत्तणं मए मुक्कं वि ण मं मुञ्चइ सव्वोवि मं आमन्तेइ बह्मणोत्ति कस्सवोत्ति अ ( पुरतोऽवलोक्य ) को उण एसो भुयगभूसणो भसिओद्धूलिअसव्वगत्तो चडुलचरणो *मज्जारो विअ इदो तदो अ धावइ ता अहं वि सद्दूलो विअ पादचङ्कमणं काऊण भीसेमि णं दासीए उत्तं । ( इति वल्कलावृतशरीरः तथा कुर्वन् अटति । )

( ततः प्रविशति यथानिर्दिष्टः मार्जारनयनः । )

**मार्जारनयनः**—मेह ज्जेव रूवं तिहुवणसुन्दरं होइ सव्वो वि णिअं रूवं सुन्दरं मणइ णाहं तहा कहेमि जदो मे जणणी जणदिट्ठी

१. हीही न मेऽस्ति सदृशो भुवनतले कोऽपि ब्राह्मणः येन यत् ब्राह्मण्यं संपादयितुं कौशिकमुनिप्रमुखा नियमव्रतक्लेशितशरीरा गिरिनदीकन्दरगुहासु पञ्चाग्निमध्ये च तपश्चरणतत्परा अद्यापि भवन्ति तादृशं ब्राह्मण्यं मया मुक्तमपि न मां मुञ्चति सर्वोऽपि मां आमन्त्रयति ब्राह्मणेति काश्यपेति च । ( पुरतोऽवलोक्य । ) कः पुनरेष भुजगभूषणो भसितोद्धूलितसर्वगात्रः चटुलचरणः मार्जार इव इतस्ततश्च धावति तदहमपि शार्दूल इव पादचङ्क्रमणं कृत्वा भीषयाम्येनं दास्याः पुत्रम् ।

२. ममैवरूपं त्रिभुवनसुन्दरं भवति सर्वोऽपि निजं रूपं सुन्दरं मन्यते नाहं तथा कथयामि । यतो मे जननी जनदृष्टिर्निपतिष्यतीति कृत्वा मम नाम कृतवती मार्जारनयन इति । अतएव ममोपरि पक्षपातोऽस्माकं स्वामिनो गिरिशस्य बहवो निवसन्ति तस्य निकटे किङ्कराः तथापि मामेव सर्वस्मिन्नपि कार्ये प्रहि-

* मञ्जारो ( पा० )

णिपडिस्सादि त्ति कदुअ मम णाम किदवई *मज्जारणअणो त्ति ( शरीरमवलोक्य विहस्य । ) अदो ज्जेव मह उवरि पक्खवादो अह्माणं सामिणो गिरिसस्स बहुणो णिवसान्ति तस्स निअडे किंकरा तह वि मं ज्जेव सव्वस्सिं वि कज्जे पहिणोइ एह्णिं वि सामिणा आणत्तं मज्जारणअण कुदो वि कारणादो मए सुदुक्खरं तवो कादव्वं ता हिमवदो उवरि किं वि थलं तुए पे क्खीयदुत्ति ता सिग्घं गच्छेमि । ( इति परिक्रामन्विदूषकमवलोक्य सभयं स्खलितचरणः । ) अब्बह्मणिअं अब्बह्मणिअं ( इति निमीलितनयनः अधोमुखः पतित्वा रोदिति । ) भो सद्दूलमहाराअ; सलणं गदं तुह आवुत्तं मं रक्ख रक्ख अहं जणणीए एक्को ज्जेव पुत्तो- ह्मि सुदो वि मम एक्को ज्जेव बालो अ ।

विदूष०—[1]उट्ठेहि, उट्ठेहि, हे भीरुअ, महाबह्मणं मं दट्ठूण कहं तुमं अब्बह्मणिअं कहेसि ।

मार्जार०—( तथैव स्थित्वा । ) [2]मह अवज्जं कहेमि ण उण बह्मणं दूसेमि ।

( विदूषकः हस्ताभ्यां आदाय मुखं मार्जयति । )

मार्जार०—( विदूषकं विलोक्य सहर्षं सलज्जं च । ) [3]अम्मो कस्सवकुदो एव्वं तुए किदं ।

---

णोति इदानीमपि स्वामिना आज्ञप्तं मार्जारनयन, कुतोऽपि कारणात् मया सुदुष्करं तपः कर्तव्यं तत् हिमवत उपरि किमपि स्थलं त्वया प्रेक्ष्यतामिति । तत् शीघ्रं गच्छामि । अब्रह्मण्यं अब्रह्मण्यं । भो शार्दूलमहाराज, शरणं गतं तव आवुत्तं मां रक्ष रक्ष अहं जनन्याः एक एव पुत्रोऽस्मि सुतोऽपि मम एक एव बालश्च ।

१. उत्तिष्ठ· उत्तिष्ठ हे भीरुक, महाब्राह्मणं मां दृष्ट्वा कथं त्वं अब्रह्मण्यं कथयसि ।

२. मम अवद्यं कथयामि न पुनर्ब्राह्मणं दूषयामि ।

३. अम्मो काश्यप कुत एवं त्वया कृतम् ।

---

*.मञ्जार ( पा० )

विदूष०—[1]कुदो उण तुहणअणं मज्जारस्स विअ दीसइ।

मार्जार०—[2]मह सहावो एसो।

विदू०—[3]मह वि एसो सहावो। (स्वगतम्।) पुच्छिस्सं दाव णं (प्रकाशम्।) अरे मज्जारणअण, कहेहि कहिंए पत्थिदोसि तुमं।

मार्जार०—[4]तुहिणाअलस्स णिअडं।

विदू०—[5]कीसा तुमं सव्वस्सि वि गत्ते भसिअधूलणं कत्तूण भुअगगणं अ धारेसि।

मार्जार०—[6]परमेसरस्स चिण्हन्ति काऊण धारेमि सव्वं।

विदू०—[7]फलं वि कहेहि।

मार्जार०—[8]सिवसरूवदा ज्जेव।

(विदूषकः दण्डकाष्ठेन मार्जारनयनस्य कण्ठमवनमयति।)

मार्जार०—[9]कुदो तुमं मं पीडेसि।

विदूष०—[10]वामणसरूवदा वि तुए गन्तव्वेत्ति।

मार्जार०—[11]धिई मुक्ख किं मं तुमं विडम्बेसि।

---

१. कुतः पुनस्तव नयनं मार्जारस्येव दृश्यते।

२. मम स्वभाव एषः।

३. ममापि एष स्वभावः। प्रक्ष्यामि तावदेनं। अरे मार्जारनयन, कथय कुत्र प्रस्थितोऽसि त्वम्।

४. तुहिनाचलस्य निकटम्।

५. कस्मात् त्वं सर्वस्मिन्नपि गात्रे भसितधूलनं कृत्वा भुजगगणं च धारयसि।

६. परमेश्वरस्य चिह्नमिति कृत्वा धारयामि सर्वम्।

७. फलमपि कथय।

८. शिवसरूपतैव।

९. कुतस्त्वं मां पीडयसि।

१०. वामनसरूपतापि त्वया गन्तव्येति।

११. धिङ्मूर्ख, किं मां त्वं विडम्बयसि।

**विदूष०**—[1]मा कुप्प मा कुप्प आवुत्तो त्ति काऊण परिहसेमि तं चिट्ठदु दाव मरिसेहि मं किं वि पुच्छिदव्वोसि ।

**मार्जार०**—[2]कामं पुच्छदु भवं दासजणोह्मि दे भवं उण बह्मणो पुआरिहो मे ।

**विदूष०**—( विहस्य । ) [3]कुदो तुमं हिमालअं पत्थिदो ।

**मार्जार०**—[4]तत्थजेव अह्माणं सामी तवो तविदुं आअच्छइ ।

**विदूष०**—[5]कुदो अस्स संसारोवरि वेरग्गं ।

**मार्जार०**—[6]अहं दाव एव्वं तक्केमि भट्टिणीए अच्चाहिदं जेव तत्थ णिमित्तन्ति ।

**विदूष०**—( स्मृतिमभिनीय । ) [7]दक्खमहे भट्टिणीए अच्चाहिदं सुणिअ देवेण किं पडिवण्णं ।

**मार्जार०**—[8]किं तुए णजाणिदं तारिसं आआलिअं वुत्तन्तं सुणिअ भट्टा अदिकोवभरिओ सीसदो एक्कं जडं उप्पाडिअ भूमीए ताडिदवन्तो ।

**विदूष०**—[9]तदोतदो ।

---

१. मा कुप्य मा कुप्य आवुत्त इति कृत्वा, परिहसामि तत्तिष्ठतु ताव मर्षय मां त्वं किमपि प्रष्टव्योऽसि ।

२. कामं पृच्छतु भवान् दासजनोऽस्मि ते भवान्पुनः ब्राह्मणः पूजार्हो मे ।

३. कुतस्त्वं हिमाचलं प्रस्थितः ।

४. तत्रैव अस्माकं स्वामी तपस्तप्तुं आगच्छति ।

५. कुतोऽस्य संसारोपरि वैराग्यम् ।

६. अहं तावदेवं तर्कयामि भट्टिन्याः अत्याहितमेव तत्र निमित्तमिति ।

७. दक्षमखे भट्टिन्याः अत्याहितं श्रुत्वा देवेन किं प्रतिपन्नम् ।

८. किं त्वया न ज्ञातं तादृशं आकालिकं वृत्तान्तं श्रुत्वा भर्त्ता अतिकोप भरितः शीर्षत एकां जटामुत्पाद्य भूम्यां ताडितवान् ।

९. ततस्ततः ।

---

अत्याहितमवद्यमित्यर्थः । " अत्याहितं महाभीतिः कर्म जीवानपेक्षि च इत्यमरः ॥

मार्जार०—[1]उप्पण्णोअ ताए अदिमेत्तभीसणवेसो अदिक्कूरभूउडिवत्तो वीरभद्दो ।

विदूष०—[2]अच्चरीअं अच्चरीअं! तद्दोतदो ।

मार्जार०—[3]विजिम्भिओ अ सुळहत्थो पहाविदो जत्थ दक्खो जण्णं करेइ ।

विदूष०—[4]तदोतदो ।

मार्जार०—[5]भीसणवेसं तारिसं तं दट्ठूण सव्वे पलाइदुं पवुत्ता ।

विदूष०—[6]तदोतदो ।

मार्जार०—[7]चडुळपादं अ महभूमिं गदुअ अतिरोसेण भुउमस्सूणि उप्पाडिअ सूरस्स दसणभङ्गं कत्तूण भअणेत्ताइं अन्धाइं *काऊण चन्दस्स तह भूमिमि पेसणं किदवन्तो जह अट्ठि वि ण दीसइ ।

विदूष०—[8]तदोतदो ।

मार्जार०—[9]तदो पलाअन्तं दक्खं घत्तूण सीसच्छेदं विहिदवन्तो ।

विदूष०—[10]हद्धी हद्धी कीरिसो उण अह्माणं सामिणीए वुत्तन्तो ।

१. उत्पन्नश्च तस्याः अतिमात्रभीषणवेषो अतिक्रूरभ्रुकुटिवक्रः वीरभद्रः ।

२. आश्चर्यमाश्चर्यम्! ततस्ततः ।

३. विजृम्भितश्च शूलहस्तः प्रधावितो यत्र दक्षो यज्ञं करोति ।

४. ततस्ततः ।

५. भीषणवेषं तादृशं दृष्ट्वा सर्वे पलायितुं प्रवृत्ताः ।

६. ततस्ततः ।

७. चटुलपादं च मखभूमिं गत्वा अतिरोषेण भृगुश्मश्रूणि उत्पाट्य सूर्यस्य दशनभङ्गं कृत्वा भगनेत्रेऽन्धे कृत्वा चन्द्रस्य तथा भूम्यां पेषणं कृतवान् यथा अस्थ्यपि न दृश्यते ।

८. ततस्ततः ।

९. ततः पलायमानं दक्षं गृहीत्वा शीर्षच्छेदं विहितवान् ।

१०. हाधिक् हाधिक्! कीदृशः पुनरस्माकं स्वामिन्या वृत्तान्तः ।

---

* कदुअ ( पा० )

**मार्जार०**—[1]जदा अ अह्माणं सामिणी अच्चाहिदं पडिवण्णा । तक्खणं ज्जेव पव्वदराअस्स देवीए मेणाए गब्भं पविट्ठा ।

**विदूष०**—[2]अच्चरीअं अच्चरीअं ।

**मार्जार०**—[3]कहिं पत्थिदो भवं ।

**विदूष०**—[4]अहं सामिणं पेक्खिदुं आअदो ।

**मार्जार०**—[5]भट्टा वि इधज्जेव आअच्छइ णन्दीसरेण सहिदो ता गच्छदु भवं अहं वि तवोजोग्गं थलं दट्ठूण निवट्टिस्सम् ।

(इति परिक्रम्य निष्क्रान्तौ ।)

**प्रवेशकः ।**

(ततः प्रविशति शम्भुः नन्दी विदूषकश्च ।)

**शम्भुः**—(सकरुणं विनिश्वस्य ।)

चिरेण प्रेमार्द्रं हृदयमिदमत्यन्तमवशं
प्रियायास्तादृक्षं विरहमपुनर्दर्शनमिह ।
उपेत्यापि क्लिश्यत्यसितनयनां दृष्टिरपि मे
पुरस्तात्खेलन्तीमिव सततमालोकयति ताम् ॥१॥

(सानुशयम् ।) स्मितं कृत्वा पूर्वं नयननलिने कूणितवती ।
सखेलं जल्पन्ती मदिरनयना मञ्जुलवचः ।
यदा प्रत्यादेशात् कुटिलनयनं वीक्षितवती
मुखं मे वामाक्षी झडिति सभयं कम्पितवती ॥ २ ॥

---

१. यदा च अस्माकं स्वामिनी अत्याहितं प्रतिपन्ना तत्क्षणमेव पर्वतराजस्य देव्या मेनायाः गर्भे प्रविष्टा ।

२. आश्चर्यं आश्चर्यम् ।

३. कुत्र प्रस्थितो भवान् ।

४. अहं स्वामिनं प्रेक्षितुमागतः ।

५. भर्त्तापि अत्रैव आगच्छति नन्दीश्वरेण सहितः तद्गच्छतु भवान् अहमपि तपोयोग्यं स्थलं दृष्ट्वा निवर्तिष्ये ।

(विचिन्त्य।) अहो धिगनार्यं माम्।

यया श्लिष्टः पूर्वं जगति वचसामप्यविषयं
गतोऽस्मिन्नानन्दं निभृतममृतप्लावित इव।
यदीयैः संलापैरपि च परमं हर्षमगमं
तया शून्योऽप्यस्यां कठिनहृदयः प्राणिमि भुवि॥ ३॥

(सविस्मयम्।) अद्यापि मम हि।

प्रियायास्तद्वक्त्रं स्फुरति पुरतः *स्मेरमसकृत्
ललाटं स्वेदाम्भःकणकलितमारादुदयते।
कपोलावादर्शाविव विमलकान्ती विलसतः
ध्वनिश्च श्यामाया हसितकलकण्ठीकलरवः॥ ४॥

**विदूष०**—(जनान्तिकम्।) [1]अम्मो पइडिगम्भीरस्स अह्माणं सामिणो वि हिअअं णलिणीपत्तगदं विअ सलिलं अदिचवलं होइ अह्मारिसाणं उण का वत्ता ता अण्णदो वावारेमि णं (प्रकाशम्।) (उपसृत्य निरूप्य च।) कीसा भवं उम्मत्तो विअ सअं ज्जेव किं वि आलवन्तो सप्पो विअ पुणो पुणो वि फुक्कुव्वाणो दीसइ।

**शम्भुः**—काश्यप, नहि शक्यं झडिति नियमनं मनसो हर्षविषादाभ्यां। पश्य।

यतो यतो धावति चञ्चलं मन-
स्ततस्ततः साधुशनैर्नियम्यते।
बलाद्यदाकृष्यत एव कामतः
करीव सम्मर्द्य बहिः प्रधावति॥ ५॥

हर्षे भवति च स्मेरं शोके ग्लानिमुपैति च।
रागद्वेषावुदस्यैव मनो भवति निर्वृतम्॥ ६॥

---

१. अम्मो प्रकृतिगम्भीरस्य अस्माकं स्वामिनोऽपि हृदयं नलिनीपत्रगतमिव सलिलं अतिचपलं भवति अस्मादृशानां पुनः का वार्त्ता तदन्यतो व्यापारयाम्येनं। कस्माद्भवान् उन्मत्त इव स्वयमेव किमपि आलपन् सर्प इव पुनः पुनरपि फूत्कुर्वाणो दृश्यते।

---

* कुन्तलयुतं (पा०)

मम हि प्रियाया लावण्यसौशील्यादिषु दृढसंलग्नमनसो न किञ्चिदिह प्रीतिमुत्पादयति । पश्य ।

भृङ्गः प्रफुल्लसरसीरुहमेत्ययस्य
माध्वीं पिबन्नतितरां मुदितश्च पूर्वम् ।
तन्नाशतो झडिति दैववशान्नितान्तं
खेदं गतः क्व पुनरस्य मनः प्रहृष्येत् ॥ ७ ॥

**विदूष०**—अहं[1] वि एदस्स दण्डकट्ठस्स कुडिलदाए कडिणदाए अअदिमेत्तं तोसेमि अदो ज्जेव खणं वि ण मुञ्चेमि णं (इति दण्डकाष्ठमालिङ्ग्य परिचुम्बति ।)

**शम्भुः**—(विहस्य ।) कोऽत्र भोः ।

(प्रविश्य ।)

**मार्जार०**—आणवेदु[2] भट्टा ।

**शम्भुः**—अपि सुनिरूपितं त्वया तपश्चरणयोग्यं स्थानम् ।

**मार्जार०**—अह[3] इं ।

**शम्भुः**—कुत्र ।

**मार्जार०**—हिमवदो[4] उवरि गङ्गापवादणामहेए साणुम्मि ।

**शम्भुः**—तर्हि आरोहणमार्गमादर्शय ।

**मार्जार०**—इदोइदो[5] भवं ।

(सर्वे आरोहणं नाटयन्ति ।)

**शम्भुः**—(अभितोऽवलोक्य नन्दीश्वरं प्रति ।)

एतस्मिन्निबिडनिबद्धकुञ्जशोभे
गङ्गाम्भःप्लवनपवित्रितान्तराले ।

---

१. अहमपि एतस्य दण्डकाष्ठस्य कुटिलतया कठिनतया च अतिमात्रं तुष्यामि अत एव क्षणमपि न मुञ्चाम्येनम् ।

२. आज्ञापयतु भर्ता ।

३. अथ किम् ।

४. हिमवतउपरि गङ्गाप्रपातनामधेये सानुनि ।

५. इत इतो भवान् ।

आनृत्यन्मदविरुवन्मयूररम्ये
वीक्ष्यन्तां मृगशिशवश्चरन्त्यरण्ये ॥ ८ ॥

**नन्दीश्वरः**—इतोऽपि देवः पश्यतु ।

पम्फुल्लकैतकरजोभसिताङ्गरागा
भृङ्गावलीवलयहारिनवाक्षमालाः ।
एता लता अपि चलन्नवपल्लवोष्ठाः
क्षिप्रं भवन्तमभिवीक्ष्य जपन्ति नूनम् ॥ ९ ॥

**विदूष०**—( मार्जारनयनमवलोक्य । ) अह्मे[1] वि पेक्खामो इध एक्को वणमज्जारो अणुअरेइ तुमं मं वि एक्को कुडिलसाहाहत्थो वुड्ढणीलवाणरो ।

**शम्भुः**—योऽयं सर्वैरपि पर्वतराज इति यदुच्यते तदुपपन्नं । तथाहि ।

*रत्नानां निलयः समुन्नतियुतः खड्गिव्रजैः सेवितो
मत्तेभैरनिशं मदार्द्रकरटैर्गजद्भिरप्यावृतः ।
सत्वोद्रिक्ततरान्तरश्च विबुधैः श्लाघ्यो भुजङ्गावृतः
काठिन्यं क्वचिदेति हन्त मृदुतां कस्मिंश्चिदेति स्फुटम् १०

**नन्दी०**—इदानीमेवास्य गिरिराजत्वमुपपद्यते । तथाहि ।

शश्वद्ध्यानविधूतकल्मषतया नैर्मल्यभाक् चेतसां
*सत्वोद्रेकमवाप्य सन्ततपस्संमोदभाजां परम् ।

---

१. वयमपि प्रेक्षामहे अत्रैको वनमार्जारः अनुकरोति त्वां । मामप्येकः कुटिलशाखाहस्तः वृद्धनीलवानरः ।

---

* रत्नानां श्रेष्ठवस्तूनां अन्यत्र मणीनां समुन्नतियुतः समुन्नत्या अत्यौन्नत्येन युतः युक्तः अन्यत्र अतिगौरवेण युक्त इत्यर्थः । खड्गिव्रजैः खड्गिनां मृगविशेषाणां व्रजैः संघैः अन्यत्र खड्गधारिणां गणैरित्यर्थः । मदार्द्रकरटैः मदसलिलक्लिन्नकपोलैरित्यर्थः । सत्वोद्रिक्ततरं जन्तुप्रचुरं अन्तरं हृदयं यस्य सः तेन अन्यत्र सत्वेन धैर्येण व्यवसायात्मकेन उद्रिक्ततरं मध्यं यस्य तेन उभयत्र "द्रव्यासुव्यवसायेषु सत्वमस्त्री तु जन्तषु" इत्यमरः । विबुधैः देवैः अन्यत्र विद्वद्भिः भुजङ्गावृतः सर्पपरिवृतः अन्यत्र परिवृत इत्यर्थः ।

* सत्वोद्रेकं सत्वाख्यगुणाधिक्यं । "गुणाः सत्वं रजस्तमः" इत्यमरः ।

वाचामप्यतिदूरवैभवजुषां योगीश्वराणामपि
स्मर्तुं दुर्लभदर्शनोऽत्र तपसे येनागतोऽभूद्भवान् ॥ ११ ॥

**विदूष०**—( नन्दिनं प्रति साधिक्षेपम् । ) ईआणिं ज्जेव तुह वुड्ढवाणरमुहस्स वअणं वि सोहइ जं सिग्घप्पसाधिणं सादिणं दुल्लहदंसणं कहेसि अहं खु बह्मणवरिट्ठो दुल्लहदंसणो अ मह सण्णिज्झदो उण अस्स पव्वदस्स माहप्पं होइ ।

**शम्भुः**—( सस्मितम् । ) महाब्राह्मणस्य तव माहात्म्यं अहं जानामि वृथाजल्पत्वयं मा भवान् कुप्यतु नन्दिने ( इति सान्त्वयति ।)

**विदूष०**—एंह्णिं पसण्णोह्मि ।

**नन्दीश्वरः**—अतिरमणीयं खल्वेतत्स्थानं तपस्यतः स्वामिनोऽतिहिहृदयरञ्जनं भवतीति मन्ये ।

**शम्भुः**—न केवलं हृदयस्य रञ्जनमेतत् । अपि तु सर्वेन्द्रियाणामपि । पश्य ।

चक्षुः स्निह्यति पावने तरुतले गात्रं च शीतानिले
श्रोत्रं वेदविदां श्रुतिप्रणयिनां कण्ठध्वनौ मञ्जुले ।
घ्राणं यज्ञकृदर्पिताध्वरहविर्गन्धे च विस्तारिते
लोलं मे रसनं च हन्त मृदुले कन्दे फले स्वादुनि ॥ १२ ॥

**विदूष०**—( जनान्तिकं नन्दिनं प्रति । ) जैत्थ खु तव सो विग्घकारणं वट्टइ तं ज्जेव थलं सिलाहइ भवं ।

**नन्दी०**—धिङ्मूर्ख, न त्वं जानासि अतिपावनेषु गिरिनदीतटेषु ऋषीणामुटजेषु च मनः प्रसन्नं विद्यमानेष्वपि बहुषु विक्षेपहेतुषु पुण्यवशात् समधिगच्छति समाधिमिति ।

---

१. इदानीमेव तव वृद्धवानरमुखस्य वदनमपि शोभते यच्छीघ्रप्रसादिनं स्वामिनं दुर्लभदर्शनं कथयसि अहं खलु ब्राह्मणवरिष्ठो दुर्लभदर्शनश्च मम सान्निध्यत पुनः अस्य पर्वतस्य माहात्म्यं भवति ।

२. इदानीं प्रसन्नोऽस्मि ।

३. यत्र खलु तपसो विघ्नकारणं वर्तते तदवस्थल श्लाघत भवान् ।

शम्भुः—इतोऽन्यत्रापि विद्यमानं द्रष्टव्यं पश्याम इति गत्वा निरूप्य ( सानन्दम् । )

पुष्पौघैर्भरिताः स्वनद्भिरलिभिः शश्वद्भ्रमद्भिर्वृता-
श्चञ्चत्कोमलपल्लवैरपि युता वातैर्मुहुः कम्पिताः ।
एताः पार्श्वगता लताः समधिकं कम्राश्च नम्राः स्वयं
शिक्षन्ते मधुरं हि नृत्यमधुना वेश्या यथा बालिकाः ॥१३॥

नन्दी०—इतोऽपि देवः पश्यतु ।

फूत्कारैः फणिनां ज्वलद्भिरधिकं दावानलैः संवृताः
क्षिप्रं तैर्दलिताः पतन्ति धरणीपृष्ठे मुहुः कीचकाः ।
तेषां ठात्कृतिभीषिताश्च सहसा मूकीभवन्तः क्षणं
पक्षाणां विधुतिं विधाय गगने भ्राम्यन्त्यमी पक्षिणः ॥१४॥

विदूष०—[1]अहं वि दाव एदाणं पिट्ठदो गमिस्सं ( इति सत्वरं धावति सर्वे हसन्ति । )

मार्जार०—[2]आअच्छ रे महाबह्मण, पअडिअं तुए बह्मणस्स चावलं ।

विदूष०—[3]मंज्जारणअण, ण खु मए तुए विअ अच्छीणि णिमीलिअ अण्णस्स दहिक्खीरादिअं चोरीअदि । ( अन्यतोऽवलोक्य सभयं मुकुलितनयनो नन्दिनं समालिङ्ग्य सवाक्स्तम्भं । ) हद्धी एदस्सिं णिउज्जे को वि वुद्धसीहो केसरसणाहो अदिदीहणहरभीसणो सिलाअलनिसण्णो मं ज्जेव उद्दिसिअ किंवि चिन्तेइ ता परित्ताअध परित्ताअध मं ( इति रोदिति । )

---

१. अहमपि तावदेतेषां पृष्ठतो गमिष्यामि ।

२. आगच्छ रे महाब्राह्मण, प्रकटितं त्वया ब्राह्मणस्य चापलम् ।

३. मार्जारनयन, न खलु मया त्वयेव अक्षिणी निमील्य अन्यस्य दधिक्षीरादिकं चोर्यते । हा धिक् एतस्मिन्निकुञ्जे कोऽपि वृद्धसिंहः केसरसनाथः अतिदीर्घनखरभीषणः शिलातलनिषण्णः मामेव उद्दिश्य किमपि चिन्तयति तत्परित्रायध्वं परित्रायध्वं माम् ।

**नन्दी०**—मूढ, मा भैषीः एष तावच्छिलातल(निषण्णो) मध्यासी-नोऽनेककल्पपरिवर्धिततपा महर्षिस्तपस्यति पश्य ।

आधाय ब्रह्मणि मनः स्वैरं मुकुलितेक्षणः ।
समाधिस्थो महानेष न किञ्चिदपि पश्यति ॥ १५ ॥

**शम्भुः**—

सोऽयं वल्लीपरिवृततनुः पक्षिणामण्डजुष्टै-
जीर्णैर्विष्वक्प्रपतितजटामण्डलैः कीर्यमाणः ।
सत्त्वैरन्यैरपि च परितः स्वेच्छया सेव्यमानो
धत्ते साम्यं भुजगनिलयः कस्यचित्पादपस्य ॥ १६ ॥

( परितोऽवलोक्य सहर्षम् । )

अत्रापि जह्नुतनयासलिलावगाह-
दत्तादराः सलिलपूरममी प्रविष्टाः ।
स्नानं महर्षिनिवहा अघमर्षणेन
साकं मुहुर्विदधते दधते न तृप्तिम् ॥ १७ ॥

अपि च ।

इह हि सपदि भस्मोद्धूलिताङ्गाश्च केचित्
करविलुलितचञ्चत्स्फाटिकाक्षा जपन्ति ।
द्रुततरमतिरम्यानूर्ध्वपुण्ड्रान्दधानाः
कतिचन जलजाक्षध्यानमत्राचरन्ति ॥ १८ ॥

तदहमपि तपसेऽतिसमीचीनं स्थलमन्वेषयामि । ( नेपथ्ये मर्दलध्वनि

**नन्दी०**—( सकौतुकमाकर्ण्य । ) देव, भवतोऽभिलषितसिद्धिरा णैव भविष्यतीति मन्ये यदयमनुकूल एव प्रवर्तते मर्दलध्वनि

**शम्भुः**—किन्वेषः स्यात् ।

**नन्दी०**—अत्रागतं तत्रभवन्तं उपश्रुत्य स्वयमेव पर्वतराज मभ्यर्चयितुमागमिष्यतीति मन्ये ।

**शम्भुः**—उपपद्यते, किमुच्यते । अतिमहान्विशुद्धस्वभावः वृद्धोपसेवी च पर्वतराजः ।

ब्रह्मापि स्वयमेव हन्त हविषो भागं पुरा कल्पयत्
यस्मै सर्वधराधराधिपतिता योग्यं महत्त्वं विदन् ।
अन्येभ्योऽपिहि पर्वतेभ्य इतरेऽत्रागत्य सर्वे तपः
कुर्वाणा मुनयो भजन्ति च परां सिद्धिं विशुद्धिं गताः॥१९॥

अन्यच्च ।

याभूत्पुरा सरसिजाक्षपदाम्बुजात-
माध्वीत्रिविष्टपपुरीध्वजपट्टिकाच ।
सेयं मयापि शिरसा विधृताच पूर्वं
गङ्गापि यस्य शिखरात्स्रवति प्रसन्ना ॥ २० ॥

**विदू०**—मॆह वि एसो पूआरिहो होइ पव्वदराओ जं मम गोत्तणिदाणेण ब्रह्मणावि समब्भच्चिदो ।

**शम्भुः**—( सस्मितम् । ) इदानीमेवास्य पर्वतराजस्य महद्गौरवं यन्महाब्राह्मणेन त्वयाप्यभिनन्द्यते ।

**विदू०**—( नन्दिनं प्रति । ) सॆव्वदा सल्लवन्तस्सावि तुह णत्थि विरामो अहं उण बह्मणो भोअणप्पिओअ विसेसदोअ पिपासिदोह्मि संवुत्तो ।

**शम्भुः**—गम्यतामभिलषितासिद्ध्यै अहमपि विविक्तदेशे पर्वतराजं प्रतिपालयामि ( इति स्तोकमन्तरं गत्वा । ) अत्रहि ।

कस्तूरिकामृगवराः खलु मन्दमन्दं
खादन्त्यमी दमनकाङ्कुरजालकानि ।

---

१. ममापि एष पूजार्हो भवति पर्वतराजो यन्मम गोत्रनिदानेन ब्रह्मणापि समभ्यर्चितः ।

२. सर्वदा सँल्लपतोऽपि तव नास्ति विरामः अहं पुनर्ब्राह्मणो भोजनप्रियश्च विशेषतश्च पिपासितोऽस्मि संवृत्तः ।

गङ्गानिलाश्च शिशिराः स्फुटपद्मगन्ध-
वाहा वहन्ति विचरन्ति तटे चमर्यः ॥ २१ ॥

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

॥ हिमालयगमनं नाम द्वितीयोऽङ्कः ॥

## तृतीयोऽङ्कः ।

( ततः प्रविशति हिमवान् मेनया सह विभवतश्च परिवारः । )

**हिमवान्**—अहो अस्माकं धन्यता ।

यस्याभवच्छरवरो युधि दानवारि-
मेरुर्धनुश्च भुजगाधिपतिर्गुणोऽपि ।
वाहाः स्वयं समभवन् श्रुतयश्चतस्रः
क्षोणी रथः स भगवान् स्वयमागतो यत् ॥ १ ॥

**मेना०**—[1]महेसरस्सावि से कुदो तवच्चरणे अहिलासो ।

**हिम०**—अस्मदनुग्रहायैव । पश्य ।

भिक्षां चिरादटति योजगदीश्वरोऽपि
भक्तेष्टदो भवति यः खलु कृत्तिवासाः ।
नित्यं श्मशाननिलयः शिवमूर्तिरेष
किं वर्ण्यते श्रुतिगणोऽपि परं व्यरंसीत् ॥ २ ॥

**मेना०**—[2]अच्चरीअं अच्चरीअं तहा जइ महन्तो वि से माहप्पं ण जाणन्ति कुदो उण अह्मारिसाणं खुद्दबुद्धीणं जाणिदुं अत्थि विहवो ।

**हिम०**—यद्यपि गतायां निशीथिन्यां यामे तु तृतीये समभ्युदय-सूचकं स्वप्नं दृष्टवतोऽपि मे न निर्वृतं चेतः

**मेना०**—[3]कीरिसो सो सिविणो ।

**हिम०**—

कदाचित्कैलासात्प्रमथगणयुक्तः शशिधर-
स्तटेऽस्मिन् गङ्गायाः कुसुमितलतापादपयुते ।

---

१. महेश्वरस्यापि अस्य कुतः तपश्चरणे अभिलाषः ।

२. आश्चर्यं आश्चर्यं तथा यदि महान्तोऽपि अस्य माहात्म्यं न जानन्ति कुतः पुनः अस्मादृशानां क्षुद्रबुद्धीनां ज्ञातुमस्ति विभवः ।

३. कीदृशः स स्वप्नः ।

कृतावासः स्वैरं हसितवदनः स्मेरनयनो
ह्यगृह्णाद्वत्साया: कमलमृदुलं पाणिमचिरात् ॥ ३ ॥

**मेना०**—तदोतदो[1] ।

**हिम०**—अनन्तरं च अतिप्रेमभरितेन शङ्करेण स्ववामार्धे सन्निधापिता च ।

**मेना०**—ण दुल्लहं अत्थि किंवि जइ देव्वं अणुऊलं भवे[2] ।

**हिम०**—यद्यप्यस्मासु प्रसन्नः सन्निहितश्च शङ्करः । तथापि तपसि वर्तमानस्य नियमव्रतादिभिर्नियमितसर्वेन्द्रियस्य परे ज्योतिषि रममाणस्य कथं वा हृदयं भवेदिति निवेदयितुमप्यस्मदुदन्तं बिभेमि स्वप्नदृष्टार्थसिद्धिं तु बृहस्पतिरेवमाह ।

" स्वप्नस्य प्रथमे यामे वत्सरेण फलं भवेत्
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ।
अरुणोदयवेलायां दशभिर्वासरैस्तथा
गोविसर्जनवेलायां सद्यः स्वप्नफलं भवेत् " इति

( प्रविश्य । )

**दौवारिकः**—देवँ, समागअं समागअं[3]

**हिम०**—( सहर्षम् । स्वगतम् । ) क्षिप्रसिद्धिं मे कथयति ( प्रकाशम् । ) किं समागतम् ।

**दौवा०**—समागअं देवस्स[4] ।

**हिम०**—स्पष्टं ब्रूहि ।

**दौवा०**—समागअं देवस्स दुवारम्मि नारदेण[5] ।

**हिम०**—अविलम्बितं प्रवेशय महर्षिम् ।

---

१. ततस्ततः ।
२. न दुर्लभमस्ति किमपि यदि दैवं अनुकूलं भवेत् ।
३. देव समागतं समागतम् ।
४. समागतं देवस्य ।
५. समागतं देवस्य द्वारे नारदेन ।

( ततः प्रविशति दौवारिकनिदर्शितमार्गः नारदः । )

**नारदः**—( सानन्दम् । )

धन्यं जन्म समस्तभूधरगणादेतस्य शैलस्य य-
त्सानुन्यत्र समस्तसिद्धनिवहाः सर्वे महर्षिव्रजाः ।
स्वीये गेह इव प्रहृष्टमनसो वासं वितन्वन्त्यमी
श्रीनाथोऽपि तपस्तनोति बदरीमूले नरश्च स्वयम् ॥ ४ ॥

**हिम०**—( झडिति आसनादुत्थाय । ) अर्घ्यमर्घ्यम् ।

( प्रविश्य । )

**पुरोहितः**—इदमानीतम् ।

**हिम०**—सोमरात, कृतसत्कारं महर्षिं अभिवीक्षितुमभिलषामि ।

**पुरो०**—अयमभ्यर्चयामीति ( नारदमुपेत्य सत्कृत्य । ) एतु एतु भवानिति ( हिमवतो निकटं प्रापयति । )

**नारदः**—( हिमवन्तमवलोक्य । स्वगतम् ।) अतिगम्भीरप्रकृतिरयम् । योऽसौ ।

चारुस्मितः सरससन्निहितां प्रियां स्वां
आनम्रगात्रलतिकां मुहुरीक्षमाणः ।
अन्तर्भृतामपिच निर्भरभूरिचिन्तां
आविष्करोति न बहिः किलगूढभावः ॥ ५ ॥

( उपसृत्य । ) स्वस्ति दम्पतिभ्याम् ।

**हिम०**—( ससंभ्रमं मेनया सह प्रणमति । )

**नारदः**—

श्रेयसे भूयसे भूयात् लोकानां सङ्गतं हि वाम् ।
कश्यपादितिसध्रीचोरविनाभावयेयुषोः ॥ ६ ॥

( हिमवन्तमवलोक्य । )

योऽसौ तपश्चरति सानुनि तावकीने
कैलासभूधरमपि प्रविहाय शम्भुः ।

हृष्टः परं त्वयि स भद्रकरश्च भूया-
द्भक्तार्तिभञ्जनपरः प्रमथाधिनाथः ॥ ७ ॥

**हिम०**—काममनुगृहीतोऽस्मि निरुपाधिककृपानिधिना महर्षिणा कोऽत्र भोः

( प्रविश्य । )

**कञ्चुकी**—आज्ञापयतु देवः ।

**हिम०**—आनीयतां मे वत्सा भगवन्तं नारदं नमस्कर्तुम् ।

**कञ्चुकी**—यदाज्ञापयति देवः ( इति निष्क्रम्य पुनः प्रविश्य । ) भर्तृदारिके इतइतः ।

( ततः प्रविशति लवङ्गिकया सह पार्वती । )

**पार्वती**—( स्वसखीं लवङ्गिकामवलोक्य । ) [1]अम्मो खणे खणे वि विप्पन्दादि मे वामणअणं ता किं णु खु फलं भवे एदस्स ।

**लवङ्गिका**—[2]चन्दसेहरसमाअमो जेव ।

**पार्वती**—( सकृतककोपम् । ) [3]तुह चित्तगअं भणेसि ।

**लव०**—[4]अहं जेव सिविणेवि जप्पेमि सिवसङ्करमहादेवेत्ति ।

**पा०**—( सलज्जं क्षणमिव तूष्णीं स्थित्वा । ) [5]हुं चिट्ठदु गच्छेमो महेसिणो पादवन्दणं कादुं । ( इति उपसर्पति । )

**हिम०**—वत्से, महर्षिं प्रणम ।

**पा०**—( सलज्जं प्रणमति । )

---

१. अम्मो क्षणे क्षणेऽपि विस्पन्दते मे वामनयनं तत्किं नु खलु फलं भवेदेतस्य ।

२. चन्द्रशेखरसमागम एव ।

३. तव चित्तगतं भणसि ।

४. अहमेव स्वप्नेऽपि जल्पामि शिवशङ्करमहादेवेति ।

५. हुं तिष्ठतु गच्छामो महर्षेः पादवन्दनं कर्तुम् ।

नार०—

भूयाॅ भवत्यनुमता हृदयापहारि-
ण्यालोलकुन्तलभरार्पितवक्रदृष्टेः।
कस्यापि कामदमनस्य च रोषणस्य
रागाभिवृद्धिकरणात् श्रितवामभागा ॥ ८ ॥

पा०(स्वगतम्।) सच्चं[1] भोदु महेसिणो वअणं।

(प्रणम्य लज्जावनतगात्री लवङ्गिकामुपसर्पति।)

ना०—(हिमवन्तमवलोक्य।) अपि शिवं भवतः सबन्धुवर्गस्य।

हिम०—अद्यैव कुशालिनो वयं येषामुपरि तत्र भवत एवमादरः।
तथाहि।

भावत्कवीक्षणलवेन भवन्ति धन्या
ये घोरदुस्तरभवाब्धिममी तरन्ति।
किन्नाम दिव्यपदपङ्कजसेवकाना-
मस्मादृशां भवति दुर्लभमत्र लोके ॥ ९ ॥

तथापि वत्साया अधिरूढयौवनाया अपि वरमलभमानाया अनुरूपवरप्रेप्सया नक्तंदिवं अनुचिन्तयतोऽपि मे न निर्णयमधिगच्छति चेतः। पश्यतु तत्रभवान् यदुच्यते कन्यापितृत्वं दुःखायेति अव्यभिचरितमेव भवति तद्वचः।

तथाहि—

जाता यद्यपि नः कुले बहुमते लावण्ययुक्ताप्यसौ
किंवाभूद्रसितेक्षणा किमभवत् श्लाघ्यैर्गुणैर्वान्विता।
शीलेनापि किमन्विता त्रिणयने किंवानुरक्ता स्वयं
तारुण्यं च विजृम्भमाणमसकृत्प्राप्तेति खिन्नं मनः ॥ १० ॥

---

*भवति इति सम्बोधनमेतत्। जगतीतिच (पा०।)

---

1. सत्यं भवतु महर्षेर्वचनम्।

**लवङ्गि०**—( जनान्तिकम् । ) हला[1] या मं उवालद्धवई तुमं गु
अणं वि दाणिं उवालह ।

**पा०**—णिआमं[2] पलपदु पिअसही ।

**नारदः**—( स्वगतम् । ) इयं हि सा दाक्षायणी जन्मान्तरेऽपि ह
संरक्तैव भवति दृढलग्ना भवति हि चेतसि वासना रक्ति
परिमर्दिते नूतनाम्बरे भवतु कोपमुत्पादयाम्यस्याः—( प्रकाशम्
कथमस्या अपि कल्याण्या अज्ञातजन्मान दुर्दर्शने हरेऽनुरा
तथाहि ।

इयं लताकोमलगात्रशोभना
स तु स्वयं स्थाणुरतीव कर्कशः ।
शुभालया शोभनभूषणाप्यसौ
श्मशानवासः स हि सर्पभूषणः ॥ ११ ॥

**पा०**—( सासूयं नारदं पश्यति । )

**नारदः**—( पार्वतीमवलोक्य सस्मितम् । ) महानुभावः खलु शङ्कर
नाहं परमार्थतो दूषयामि अपि तु भवतीभावावबोधायैव ।

यद्ध्यानान्मुनयो भवन्ति जगतीपापापनोदक्षमाः
कुम्भोद्भूतमुनीश्वरप्रभृतयो वृद्धिंच सिद्धिं गताः ।
अन्ये चापि यदीयभक्तिभरिता भद्रं विनिद्रं गताः
किं ब्रूमो वयमस्य वैभवमहाम्भोधेस्तटस्थाः परम् ॥

शैलराज, इयं हि सा दाक्षायणी दक्षाध्वरभुवि या योगेन विसृष्ट
निजशरीरं यां च त्वं दुहितरं मन्यसे ।

यस्याः कटाक्षविशिखैर्हृदि विद्ध एव
रागानुविद्धहृदयो विरहासहिष्णुः ।
शून्यं जगत्समवधार्य विरक्तचेताः
संसारवर्त्मनि हरस्तपसे प्रवृत्तः ॥ १२ ॥

---

१. हला या मामुपालब्धवती त्वं गुरुजनमपि इदानीं उपालभस्व ।

२. निकामं प्रलपतु प्रियसखी ।

हिम०—( साश्चर्य पार्वतीमवलोक्य । स्वगतम् । ) कथमियं जगदीश्वरी दुहितृभावेन विडम्बयन्ती संसृतिं कुलमिदं समधिकमलङ्करोति मदीयम् । अहो, मे धन्यता ( प्रकाशम् । नारदं प्रति सहर्षम् । )

एका सुता शिवजला जगतीं पुनाना
गङ्गा शिवस्य शिरसापिच लाल्यतेऽत्र ।
एषा सुतापि भविता यदि जन्मनीह
भर्गस्य हन्त दयिता खलु मे प्रकर्षः ॥ १४ ॥

नारदः—न तत्र सन्देग्धु भवान् ।

हिम०—तथापि अत्युग्रतपसं शङ्करमनुचिन्त्य कातरं भवति मे मनः इतिकर्तव्यतामूढं च ।

नारदः—तदत्र भवता एवं कर्तव्यम् ।

हिम०—आज्ञापयतु भवानवहितोऽस्मि ।

नारदः—केनापि व्याजेन तन्निकटएवात्रभवती स्थापनीया भवता ।

हिम०—व्याजमपि कथयतु भवान् ।

नारदः—स हि धूर्जटिस्तपसि संसक्तमनास्तथापि परिचर्यायै प्रार्थयतो भवतो दुहितरं अनुमन्यत एव ।

हिम०—यद्येवं तर्हि प्रयतिष्ये ।

नारदः—तर्हि यथाभिलषितसिद्ध्यै गच्छतु भवान् अहमपि महेन्द्रमवलोक्य गच्छामीति । (आकाशगमननाटितकेन सहर्षं स्वगतम् ।)

यथाभिलषितं कृतं सुरवरेण च प्रार्थितं
महीधरसुता मनोरथतरुश्च संवर्धितः ।
मुदृप्ततरतारकासुरवधस्य मार्गः कृतो
विधिः पुनरतःपरं यदपि कर्म तत्साधयेत् ॥ १५ ॥

( इति निष्क्रान्तः । )

( ततः प्रविशति शम्भुः । )

शम्भुः—( सहर्षम् । ) अहो, देशस्यास्य रमणीयता ।

इह क्वचिदधःस्खलच्छिशिरवारिपूरस्फुर-
न्निकुञ्जतरुशाखिकानटनतत्परा मर्कटाः ।
इतोऽपि विविधद्रुमाकलितनीडसङ्घाद्बहि-
र्विसृत्वरबहुत्वराः श्रवणरम्यरावाः खगाः ॥ १६ ॥

कथं चिरायते शैलराजः भवतु तदत्रैव कस्मिंश्चिद्विविक्तदेशे रहसि स्थित्वा निर्भरमानन्दभरितमात्मावलोकनं करिष्ये । ( इति गुहां प्रविविक्षुः । ) अहो, मनसि मे नैर्मल्यं निर्वृतिश्च सम्प्रति हि ।

झडित्यपगतं तमस्तदनु राजसं जृम्भणं
प्रशान्तमधुना लसच्छविम सत्वमुज्जृम्भते ।
ततो मनसि निर्मले जगदिदं स्फुरत्यग्रतो
यथा किमपि वस्तुकं बृहति दर्पणे स्फाटिके ॥ १७ ॥

( प्रविश्य ।)

**नन्दीश्वरः**—देव, भवतो दर्शनमभिलषन्नवसरं प्रतीक्षते सपरिवारः शैलराजः ।

**शम्भुः**—त्वरितं प्रवेशय तम् ।

**नन्दी०**—यदाज्ञापयति देवः । ( इति निष्क्रम्य । ) इतइतो भवान् ।

**हिम०**—( मेनया सहितः पार्वतीं पुरस्कृत्य दूरत एव सप्रश्रयम् । स्वगतम् ।)

मूर्तित्रितयमाविश्य गुणकर्मविभेदतः ।
*ब्रह्मविष्णवीश्वराभिख्यां भजुषे ज्योतिषे नमः ॥ १८ ॥

( प्रकाशम् उपसृत्य ससम्भ्रमम् ।) हिमालयोऽहमभिवादयइति पत्नीपुत्रीभ्यां सह प्रणमति ।

**शम्भुः**—

भवान्पत्नी च पुत्रीच त्रितयं शुभमश्नुतात् ।
यथा योगश्च *भक्तिश्च विद्या च त्रितयं युतम् ॥ १९ ॥

अपि कुशलं भवतो भवदीयानां च ।

---

ब्रह्माब्जेक्षणरुद्राख्यां पा०

---

*योगस्य भक्तिरङ्गं भवतीति योगविदः तदुभयजन्या च भवति हि विद्या ।

हिम०—

यदायत्तमिदं कृत्स्नं जगन्मंगलमश्नुते ।
तदर्पितभरस्याद्य कुशले कोस्ति संशयः ॥ २० ॥

शम्भुः—( नन्दिनं संज्ञापयति । नन्दिना समानीतेषु आसनेषु सर्वे यथार्हमुपविशन्ति । )

शम्भुः—( पार्वतीमवलोक्य स्वगतम् । )

इयं कुटिलकुन्तला स्मितमरीचिजालावृतं
मुखाम्बुजमिदं मुहुस्तरलतारकापाङ्गकम् ।
विनम्रमपि लज्जया विदधती शनैः सादरं
मदास्यमवलोकते वलितवामदृष्टिश्चिरात् ॥ २१ ॥

तिष्ठतु किमनया ललनया प्रयोजनमस्माकं तपसि प्रवृत्तानां ।

हिम०—भगवन्नतर्कितोपनतं तत्रभवतो दर्शनं स्मारं स्मारं विस्मयाम्बुधिनिमग्नं मे मनो न कथञ्चिदपि पारं लभते । तथाहि ।

भवद्दीक्षाश्लिष्टा इह हि भुवि ये योगनिरताः
सतां तादृक्षाणामपि भवति सङ्गः कथमपि ।
तदेतद्युष्माकं बहुसुकृतिसङ्गाभिलषितं
किमल्पैः पुण्यैर्मे झडिति घटते सङ्गतमहो ॥ २२ ॥

शम्भुः—शैलाधिराज इह खलु भवदीये सानुनि कतिपयवत्सरांस्तपस्तप्तुमागतोऽस्मि तदनुजानीहि माम् ।

हिम०—अनुग्रहः खल्वेषः केवयमनुज्ञातुं युष्मत्सदनगमने । पश्यतु भगवान् ।

फलं वा पुष्पं वा सरसि शिशिरं स्वादु सलिलं
कुशानां स्तम्बो वा तरुगणगतं वल्कलमपि ।
समिद्वा पत्रं वा यदपि तपसे रोचत इदं
समस्तं तद्ग्राह्यं न खलु भवतां सद्मनि भिदा ॥ २३ ॥

किञ्चान्यदपि मदीयं विज्ञापनं अनुगृह्णातु देवः ।

शम्भुः—किं तत् ।

**पा०**—( स्वगतम् । ) दाणिं[1] खु देवदाहिं महेसीहिं अ अणुगिहीदव्वा होमि ।

**हिम०**—इयमपि मे वत्सा तपश्चरन्तं तत्रभवन्तं शुश्रूषताम् ।

**पा०**—किं[2] भणिस्सदि मे दइओ ।

**शम्भुः**—( स्वगतम् । ) अपि मे तपसो विघ्नो भवेदनया सुन्दर्या अथवा प्रतिबन्धकसत्व एव प्रकाशते तेजस्विनां कार्यसिद्धिः । तदेवं ब्रवीमि । ( प्रकाशम् । ) स्वैरं शुश्रूषताम् ।

**पा०**—( सहर्षं । स्वगतम् । ) दाणिं[3] ज्जेव अणुऊलाओ देवदाओ ।

( नेपथ्ये । )

**वैतालिकः**—महाराज, सुखाय ते भवतु माध्यन्दिनी सन्ध्या ।

रविकरपरितप्ता ग्लायमानाः पुरस्तात्
हरिणशिशव एते गाङ्गमम्भः पिबन्ति ।
तरुशिखरनिषण्णाः पक्षिणः पक्षजालै-
र्मुकुलितनयनान् स्वानर्भकान् छादयन्ते ॥ २४ ॥

**द्वितीयः**—

एते यथा मुनिगणा नियमाय गङ्गा-
पूरस्य मध्यमवगाह्य न तृप्तिभाजः ।
सूर्योऽपि तद्वदति तप्ततनुर्मयूखैः
स्वीयैः स्वयं प्रविशतीव जलं हि गाङ्गम् ॥ २५ ॥

**शम्भुः**—शैलराज, गम्यतां माध्यन्दिननियमाय अहमपि स्वाभिलषितसिद्ध्यै गच्छामीति ।

( यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे । )

**हिमवदागमनं नाम तृतीयोऽङ्कः ॥**

---

१. इदानीं खलु देवताभिर्महर्षिभिश्च अनुगृहीतव्या भवामि ।

२. किं भणिष्यति मे दयितः ।

३. इदानीमेव अनुकूला देवताः ।

## चतुर्थोऽङ्कः ।

( ततः प्रविशति गन्धर्वमिथुनम् । )

चित्रसेनः—प्रिये चारुहासिनि, अहो, अस्माकं महाराजस्य महेन्द्रस्य मतिशालिता यन्निखिलभुवनमित्रं भगवन्तं नारदं प्रेषयित्वा शैलराजदुहितरं गिरिशस्य परिचर्यायां पर्यकल्पयत् । किमुच्यते बृहस्पतिशिष्यः खल्वसौ ।

चारु०—[1]कुदो उण अह्माणं सामिणो एदस्सिं कज्जे अहिणिवेसो ।

चित्र०—प्रबलशत्रुणा अभियोग एव निदानमस्य ।

चारु०—[2]को उण एसो जो तिहुवणणाहस्स अह्माणं सामिणो । वि हिअअभीसणो भोदि ।

चित्र०—किं न श्रवणपथमागतं भवत्याः उद्घुष्यते खलु कश्चन तारकाख्योऽसुरः यस्य पुरे रविरपि मृदु तपति इन्दुरपि समयं प्रतीक्षते पुराणकुसुमपतनभयात् मन्दंमन्दं वाति पवनः । अन्येपि अमरवरास्तत्प्रसादापेक्षिणो नक्तंदिवं विज्वरितहृदयाश्च भवन्ति । आस्कन्द्यचामरावतीमसकृदपहृतामरललनाः बन्दीकृत्य च निःशङ्कं विहरति निरङ्कुशः शत्रुषु ।

चारु०—[3]कुदो तस्स तारिसो पदावो ।

चित्र०—स खलु तपसा समाराध्य कमलभवनं कैश्चिदप्यवध्यतां स्वस्य प्रार्थितवान् । कमलभुवापि तथैव वरमदायि ।

चारु०—[4]किं णत्थि तस्स को वि वहोवाओ ।

---

१. कुतः पुनरस्माकं स्वामिन एतस्मिन्कार्ये अभिनिवेशः ।

२. कः पुनरेषः यस्त्रिभुवननाथस्य अस्माकं स्वामिनोऽपि हृदयभीषणो भवति ।

३. कुतस्तस्य तादृशः प्रतापः ।

४. किं नास्ति तस्य कोऽपि वधोपायः ।

चित्र०—तदेवेदानीं कथ्यते ऋते च मृत्युञ्जयतनयान्नकश्चिदपि भुवनतले तस्य विजेता ।

चारु०—[1]कहं तस्स उग्गे तवसि वट्टन्तस्स णिवुत्तविसअरागस्स अकिददारपरिग्गहस्स तणओप्पादणं घडदि ।

चित्र०—तदर्थमेव हि परिचरति शैलसुता ।

चारु०—[2]जुज्जइ एदं जइ तस्स विसआहिलासो भवे ।

चित्र०—न भवति हि को नाम जगति विजितहृदयो निर्जितरम्भासौन्दर्यया सुन्दर्या पश्य ।

दरविकसितचञ्चत्कुन्दमन्दस्मितायाः
जितकिसलयबिम्बस्फीतरागाधरायाः ।
दलितकुवलयश्रीहारिरम्येक्षणायाः
मुनिरपि वशमीयाद्वीक्ष्य वक्षः कृशाङ्ग्याः ॥ १ ॥

तदपि तस्य रागाभिवृद्धये प्रेषिष्यते स स्वयमेव मदनमहाराजः वसन्तसहायश्च तन्नियतमेव तपोविघटनात् स स्थाणुरचिरेणैव वशमेष्यति अतिरुचिरतनुलतिकाया हिमगिरितनयायाः ।

चारु०—[3]साहु साहु जुज्जइ एस उवाओ ।

चित्र०—आवामपि एतदद्भुतविलोकनाय प्रथममसरसभामधिगम्य पश्चात् हिमाचलमेव गच्छावः ।

(इति परिक्रम्य निष्क्रान्तौ ।)

---

१. कथं तस्य उग्रे तपसि वर्तमानस्य निवृत्तविषयरागस्य अकृतदारपरिग्रहस्य तनयोत्पादनं घटते।

२. युज्यत एतत् यदि तस्य विषयाभिलाषो भवेत् ।

३ साधु साधु युज्यत एष उपायः ।

---

पृथुतरकुचयुग्मोत्तुङ्गवक्षस्थलायाः [ पा० ]

**मिश्रविष्कम्भः—**

( ततः प्रविशति वसन्तेन सँल्लपन्मन्मथः । )

**मन्मथः**—( सदर्पम् । )

नास्माकं धनुरूर्जितं शरगणा नैते दृढा मौर्व्यपि
स्थैर्यं नैति रथश्च चञ्चल इदं छत्रं क्षयिष्णु स्वयम् ।
सेना अप्यबलास्तथापि भुवने सर्वेऽपि नः किङ्करा
ब्रह्माब्जेक्षणशङ्करप्रभृतयः शूरो मदन्योऽस्ति कः ॥ २ ॥

**वसन्तः**—( स्वगतम् । ) अतीव दर्पभरितो भवति मे प्रियवयस्यः तद्भवतु एवमभिधास्यामि । ( प्रकाशम् । ) शङ्करः परमत्युग्रे तपसि वर्तते विजितत्रिपुरवरस्य विषमलोचनस्य तस्य किंवा भवति सुदुष्करं पश्येदानीमपि तपसि वर्तमानस्य निर्विघ्नमेव विविधसिद्धयो विजृम्भन्ते ।

**म०**—किं वा मम सुदुष्करं वर्तते ।

**व०**—जनाः परमेवं भणन्ति अजित्वैव मदनः पुरमथनं वृथैवाभिमानादात्मानं जगदेकशूरं मन्यते केवलमबलासु अथवा तत्सदृशेषु च केषुचित् पुरुषेषु पुनरस्य शौर्यं भवति निरङ्कुशं न पुनरत्युग्रतपोनिलयेषु शरभङ्गादिषु किमु वक्तव्यं शङ्करादिषु, अकिञ्चित्करमेवास्य भवति पौरुषमिति ।

**म०**—( साधिक्षेपम् । ) शङ्करस्तस्य पिता पितामहो वा न कोऽपि मे पुरतो भवति विजृम्भितसायकस्य । पश्य ।

---

१ धनुः इक्षुमयं पुष्पधन्वेत्यभिधानात् । शरगणाः अरविन्दादयः कुसुमबाणसमूहाः । " अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः " इत्यमरः । न दृढा अतिमृदुलतयेति भावः । मौर्व्यपीति भ्रमरमयत्वात् गुणस्य चाञ्चल्यमिति भावः छत्रं इन्दुः क्षयिष्णु क्षयशीलः कृष्णपक्षेतस्य कलारहितत्वादिति भावः । सेना इति अबला बलरहिताः इति ध्वन्यते । प्रकृते तु अबलाः स्त्रियः ।

२ तत्पिता तस्य शङ्करस्य पिता ब्रह्मा कस्मिंश्चित्समयविशेषे ब्रह्मणो निमीतितललाटस्वेदबिन्दोः रुद्रः समजनीति पौराणिकाः । पितामहः विष्णुरित्यर्थः ।

लक्ष्मीं वक्षसि सन्ततं वहति सः श्रीवल्लभः कौस्तुभं
प्रेयस्याः सहजं दधाति हृदये क्षीराब्धिमध्येशयः ।
ब्रह्मापि स्वमुखारविन्दनिलयां वाणीं करोति स्वयं
शम्भुं चार्धशरीरहारिदयितं प्रेम्णा विधास्ये क्षणात् ॥ ३ ॥

( इति साटोपं परिक्रामति )

( प्रविश्य देवदूतः चीटिकां ददाति । )

म०—( स्वगतं वाचयित्वा सहर्षम् । ) वयस्य, अस्मदागमनं महेन्द्रः प्रतिपालयति तच्छीघ्रमेव गन्तव्यमस्माभिः तर्हि हृदयदयितामापृच्छ्य आगच्छामीति (पुरतोऽवलोक्य सोत्कण्ठम् ।) कथमियमत्रैवागच्छति मे प्रियतमा सहसख्या । इयं हि ।

चारुस्मितामादिरघूर्णितलोचनेन
पादाम्बुजं निदधती भुवि मन्दमन्दम् ।
शोणाधराहसितपल्लवपाणिनेदं
स्रस्तं निजोरसि दधाति खलूत्तरीयम् ॥ ४ ॥

ततः प्रविशति । )

रतिः—( सखीमवलोक्य सस्मितम् । ) णोमालिए अवितुमं जाणासि कहिं वट्टदि मे पाणवल्लहो सवअस्सो ण खु मे तेण विणा खणं वि सुहं अधिगच्छादि अन्तरप्पा ।

नवमालिका—हेला, पुरदो दिट्ठिं देहि इधज्जेव सहआर वुक्खमूलं अधिचिट्ठदि पिअवअस्सेण किं वि आलवन्तो ।

रतिः—( ससम्भ्रमं निरूप्य सहर्षम् । ) कैहं इधज्जेव चिट्ठदि मे व-

१ नवमालिके, अपि त्वं जानासि कुत्र वर्तते मे प्राणवल्लभः सवयस्यः न खलु मे तेन विना क्षणमपि सुखमधिगच्छति अन्तरात्मा ।

२ हला, पुरतोदृष्टिं देहि अत्रैव सहकारवृक्षमूलमधितिष्ठति प्रियवयस्येन किमपि आलपन् ।

३ कथं अत्रैव तिष्ठति मे वल्लभः सप्रियवयस्यः कुतो विलम्बते मया पूर्वं अर्धनिपीतं आसवमपि न पिबति तिष्ठतु अहमेवास्मै समर्पयामि । इमं आसवं प्रतिगृहात मे प्रियतमः ।

हृहो सपिअवअस्सो कुदो विलम्बेदि मए पुव्वं अह्मणिपीदं आसवं वि ण पिबेदि चिट्ठदु अहं ज्जेव से समप्पेमि (इति सखीहस्ताच्चषकमादाय सत्वरमुपसृत्य ।) इमं आसवं पडिगिह्णदु मे पिअतमो (इति मद्यमर्पयति ।)

मन्म०—(गृहीत्वा ।) इदं मे वीरपाणं भवतु प्रयास्यतः [इति] (आसवं पिबति ।)

वसन्तः—प्रतिहतममङ्गलं प्रतिहतममङ्गलम् । (इति कर्णौ स्पृष्ट्वा भूमिं स्पृशति ।)

रतिः—(स्वगतम् ।) हद्धी हद्धी किं मे वामेदरं णअणं पप्फुरदि ।[1]

मन्मथः—किं मया भणितं महेन्द्रसभां प्रयास्यतः यस्य कस्यचिच्छत्रोर्जयाय इदं वीरपाणं भवत्विति । कोऽत्र भोः

(प्रविश्य ।)

पुण्ड्रकः—आणवेदु भट्टा ।[2]

मन्म०—क्षिप्रं धनुरानीयताम् ।

पु०—(निष्क्रम्य । स्वगतम् ।) पुरा देवदूदेण जं मे भणिदं सामीमहेन्देण सम्भुणिअडं पेसिस्सदित्ति तं इदं आपडिदं स उण तिणयणो उग्गे तवसि वट्टइ ता सव्वहा सामिणो अणत्थो ज्जेव कागई पुरुसोत्तमं ज्जेव कमलणअणं सामिणो कुसलस्स किदे अब्भच्चेमि ।[3] (इति ध्यानं नाटयति ।)

मन्म०—कथं चिरायते मूर्खः रे पुण्ड्रक ?

---

१. हाधिक् हाधिक् किं मे वामेतरत् नयनं प्रस्फुरति ।

२. आज्ञापयतु भर्ता ।

३. पुरा देवदूतेन यन्मे भणितं स्वामी महेन्द्रेण शम्भुनिकटं प्रेषिष्यत इति तदिदमापतितं स पुनस्त्रिणयनः उग्रे तपसि वर्तते तत्सर्वथा स्वामिनोऽनर्थ एव का गतिः पुरुषोत्तममेव कमलनयनं स्वामिनः कुशलस्य कृते अभ्यर्चयामि ।

( प्रविश्य । )

**पुण्ड्रकः**—देव[1] अअह्मि । आणवेदु भट्टा

**मन्म०**—रे जाल्म, मदाज्ञामुल्लङ्घ्य किं क्रियते भवता ।

**पु०**—[2]सामिणो कुसलं उद्दिसिअ देवस्स जणओ नाराअणो समब्भच्चिदो ।

**मन्म०**—अरे मूर्ख, स कथं उल्लङ्घितराजशासनस्य तव पूजामङ्ग्यकार्षीत् अथवा *पुराणपुरुषः खल्वसौ असकृदपि जलधीक्षणात् †भवति हि मतिचाञ्चल्यमस्य तत्तिष्ठतु धनुः क्व? ।

**पु०**—[3]ईदं आणइस्सं ।

**मन्म०**—अरे मूढ, न पुनरानीतं इतः परमेव आनेष्यते त्वया? धिक् जाल्म,

**पु०**—[4]विणा वि अवराहं दासस्स उवरि जइ कुप्पइ भट्टा ता अण्णदो गमिस्सं । ( इति सत्वरं धावति । )

**म०**—( सक्रोधम् । ) अरे अविनीत, बध्नामि त्वामिति ( उत्तरासङ्गेन बन्धयितुं प्रधावति । )

**पु०**—( भीतभीतः पादयोः पतित्वा ।) [5]मरिसेदु मरिसेदु भट्टा महएक्कवारं अवराहं ।

**म०**—उत्तिष्ठ रे ‡बर्बर, सर्वदाप्येवमेव भणासि ।

---

१. देव, अयमस्मि । आज्ञापयतु भर्ता

२. स्वामिनः कुशलमुद्दिश्य देवस्य जनको नारायणः समभ्यर्चितः ।

३. इदमानेष्यामि ।

४. विनाप्यपराधं दासस्योपरि यदि कुप्यति भर्ता तदन्यतो गमिष्यामि ।

५. मर्षयतु मर्षयतु भर्ता ममैकवारमपराधम् ।

---

* पुराणपुरुषः अनादित्वात् भगवत इति भावः । वृद्ध इति च ध्वन्यते ।

† क्षीराब्धिशायित्वात् अतिचपलसमुद्रपरिचयात् इति भावः । लडयोरभेदात् मन्दमतेः सहवासादिति च ध्वन्यते ।

‡ चपलेत्यर्थः ।

**पु०**—( उत्थाय सकामुकं आगत्य । ) ईमं चावं पडिगिह्णदु भट्टा ।
**म०**—( धनुरादाय रतिमवलोक्य । ) सुन्दरि, अनुजानीहि मां महेन्द्र-सभां गन्तुम् ।
**रतिः**—( सविषादं विनिश्वस्य । ) अहं वि आअच्छेमि कहं मं एआइणिं मोत्तूण सग्गगमणं रोअदि पाणणाहस्स ।
**म०**—अयि विरहकातरे, माभैषीः नवमालिकया सह विहरन्ती तिष्ठ । अतित्वरितमागच्छामि नाहं शक्नोमि महेन्द्रस्य शासनमुल्लङ्घयितुं अनिर्धारितकार्यतया च न हि तत्रभवती नेतव्या कदाचिन्महदायोधनं भवेत् अतिभीरुस्वभावा च भवती ।
**रतिः**—( दीर्घमुष्णं विनिश्वस्य स्वगतम् । ) का गई । ( प्रकाशम् । ) पुणो वि कदा मे दंसणं भवे हि अअदइदमुहकमलस्स ।
**मन्मथः**—( सदयं कण्ठमालिङ्ग्य कर्णस्योपरि कमलं निवेश्य । ) प्रिये,

कर्णार्पितस्य कमलस्य सकेसरस्य
पत्रौघमत्र गणयस्व यदैतिचान्तम् ।
तस्मिन् क्षणे तव सकाशमहं भजेय-
मेतेन पुष्पधनुषा च शपे मृगाक्षि ॥ ९ ॥

**रतिः**—सिग्घं ज्जेव आअन्तव्वं अज्जउत्तेण विणा खणं वि तत्तहोदा दुक्खदुक्खं हि जीवेमि आहारोवि ण रोअदि मे
**म०**—( सस्मितं मुखमुन्नमय्य । ) इन्दुवदने, किं कदाचिदपि मया भवती प्रतारितपूर्वा । किंबहुना ।

---

१. इमं चापं प्रतिगृह्णातु भर्ता ।

२. अहमप्यागच्छामि कथं मामेकाकिनीं मुक्त्वा स्वर्गगमनं रोचते प्राणनाथाय ।

३. का गतिः पुनरपि कदा मे दर्शनं भवेत् हृदयदयितमुखकमलस्य ।

४. शीघ्रमेव आगन्तव्यं । आर्यपुत्रेण विना क्षणमपि तत्रभवता दुःखदुःखं हि जीवामि आहारोऽपि न रोचते मे ।

चक्राह्वयोऽपि निवसेद्दयितां विहाय
भृङ्गीं विहाय विचरेदपि भृङ्गराजः ।
नूनं त्वया विरहितो मदिरेक्षणेऽस्मिन्
जीवामि नैव भुवने क्षणमप्यधन्यः ॥ ६ ॥

तद् द्रुततरं दृढमालिङ्ग्य मां विसर्जयतु भवती ।

**रतिः**—( तथा कृत्वा स्वगतम् । ) हद्धी हद्धी किन्ति विणा वि णि मित्तं रणरणभरिअं वेवादि मे हिअअं भोदु सव्वदो माहवो रक्खदु- ( सवामाक्षिस्पन्दं किञ्चिदिव समाश्वस्य प्रकाशम् । ) गच्छ मे णाहो अहिमदलाहस्स ।

**म०**—( वसन्तमाहूय सत्वरं गच्छन् स्खलितचरणः स्वगतम् । ) हा धिक् किं मे चरणं स्खलति भवितव्यं भवतु गरीयसी खलु भवितव्यता

( प्रकाशं वसन्तमवलोक्य । )

किं वा रहः प्रणयिनी कुपिता शची स्या-
दाहोस्विदन्यललनामभिलष्यतीन्द्रः ।
किं वा तपस्यति रिपुः प्रविरुद्ध्य देवै-
रित्याकुलं हृदयमेति न निर्णयं मे ॥ ७ ॥

( इति वसन्तदेवदूताभ्यां सह परिक्रम्य निष्क्रान्तः । )

( ततः प्रविशति सिंहासनाधिष्ठित इन्द्रः सर्वे देवा महर्षयश्च । )

**इन्द्रः**—( बृहस्पतिमभिवीक्ष्य । ) सुरगुरो, राज्यं हि नाम महत्क्लेशकारणं हृदयस्य । तथाहि ।

औन्नत्यं महदेत्य नीचमपि यन्मानादिभिर्लालयन्
अन्तर्भीतियुतोऽपि वैरिनिवहान्निर्भीकतां दर्शयन् ।
क्लेशानामयुतं वहन्नपि मनस्यानन्दयन् स्वप्रजाः
न्याय्येनैव पथागतोऽप्यधिपतिर्निन्द्योऽपि कैश्चिद्भवेत् ॥ ८ ॥

---

१. हाधिक् हाधिक् । किमिति विनापि निमित्तं रणरणभरितं वेपते मे हृदयं भवतु सर्वतो माधवो रक्षतु । गच्छतु मे नाथोऽभिमतलाभाय ।

**बृहस्पतिः**—अमरराज, नैतदेवं[*] वक्तव्यं न हि भवति राज्यमल्पस्य तपसः फलं । पश्यतु भवान् ।

एकः सन्नपि सर्वमेव भुवनं स्वायत्तमालोकयन्
पश्यन् स्वस्य च हर्षशोकसमये हृष्टं च खिन्नं जगत् ।
सर्वेषामपि रक्षणेन सततं प्रीतिं परामावहन्
अत्रामुत्र च कीर्तिसौख्यदमिदं राज्यं हि धन्यो भजेत्॥९॥

**इन्द्रः**—तथ्यमाह भवान् ।

पिता[†] वा तत्पिता वापि प्रपितामह एव वा ।
प्रजानां वृद्धये लोके तपश्चरति सर्वदा ॥ १० ॥

**कञ्चुकी**—(ससम्भ्रममुत्थाय सँल्लपतोर्बृहस्पतिमहेन्द्रयोरपि वचनमनाकर्ण्य ) क इमे कोलाहलं कुर्वते ( कर्णं दत्वा । ) भो भो सँल्लपन्तः सभास्ताराः, स्मरत मद्वेत्रयष्टिं किं यूयं सभार्हाः आनखोत्पत्तेर्वयमीश्वराभिप्रायज्ञा एव ।

( प्रविश्य । )

**प्रतीहारः**—( कञ्चुकिनं प्रति । ) बहिः प्रकोष्ठमधितिष्ठति मन्मथः सहवसन्तेन तद्भवान् निवेदयतु देवाय ।

**कञ्चु०**—( सक्रोधनम् । ) नायं ममाधिकारः त्वमेव निवेदय ।

**प्रती०**—वृद्धः खलु भवति [‡]भवान् ।

**कञ्चु०**—अन्यथा[§] ।

**प्रती०**—मा कुप्यतु भवान् । अहमेव निवेदयामीति (उपसृत्य ।) देव, द्वारि तिष्ठति मकरध्वजः सहवसन्तेन स्वामिनोऽवसरं प्रतीक्षते ।

**इन्द्रः**—( सादरं सहर्षं च । ) का यन्त्रणा । द्रुततरं प्रवेशय तौ ।

---

* एतत् राज्यं एवं क्लेशकारणम् ।

† पिता कश्यपः तत्पिता मरीचिः प्रपितामहः ब्रह्मा ।

‡ अतो न ताडयामि इति भावः ।

§ वृद्धत्वाभावे किं कर्तव्यं त्वयेति भावः ।

( ततः प्रविशति मन्मथः । )

म०—( जनान्तिकं सस्मितम् । ) वयस्य पश्य महेन्द्रस्य गाम्भीर्यम् ।

मन्दस्मितस्फुरितचन्द्रिकयानुलिप्त-
दन्तच्छदो मम मुखे निहितार्धदृष्टिः ।
पार्श्वे बृहस्पतिवचोभरितार्धकर्णः
सभ्यानिमानपि यथोचितमीक्षतेऽसौ ॥ ११ ॥

वस०—किमुच्यते त्रिभुवनतिलकः खल्वसौ ।

इन्द्रः—( आत्मगतम् । )

सविनयमभियाति द्राङ्मदाज्ञाप्रतीक्षः
सवयसमपि पार्श्वे भाषमाणो वसन्तम् ।
मदभिलषितसिद्धिं भाविनीमञ्जसाऽयं
कथयति मुखरागादित्यहं तर्कयामि ॥ १२ ॥

( प्रकाशम् । सरभसम् । ) वयस्य, अपि स्वागतं भवतः सवसन्तस्य ।

म०—भवद्वयस्यशब्देन कुतोऽपि न शिवक्षतिः ।
पृष्टस्य स्वागतस्यास्य फलं किमपरं भवेत् ॥ १३ ॥

इन्द्रः—( आत्मगतम् । ) यत एव अहं तपस्यतः शिवस्य क्षतिमभिलषामि । स पुनरेवं ब्रवीति भवतु ( प्रकाशम् । सादरम् । ) मत्समीपे आस्यतां सवसन्तेन भवता ।

( नमस्कृत्य उभौ उपविशतः । )

म०—अपि कुशलं देवराजस्य अथवा किमु प्रष्टव्यम् अर्पिते च राज्यभरे बृहस्पतिधिषणायाम् ।

इन्द्रः—

भुवनविदितं ह्येतद्राज्यं बृहस्पतिमेधया
तव सुधनुषः साहाय्यादप्यजृम्भितशात्रवम् ।
मम तु कुलिशं शस्त्राण्येतान्यमूनि च साधना-
न्युचितकरणाभावाद्भूषासमानि विचिन्तये ॥ १४ ॥

म०—

यद्प्यमरराज, मे भवति पौरुषं सर्वतो
निरङ्कुशमरिव्रजे तदपि तावकेक्षावशात् ।
न खल्वमृतदीधितेरुचिरदीप्तिसंपर्कतो
विनासलिलराशिरप्युदधिरेति वृद्धिं पराम् ॥ १५ ॥

तदत्राह्वानकारणमवगन्तुमभिलषामि ।

सुरेषु दयितेषु वा क इह भूरिदृप्तः स्वयम्
त्वदीयमपि शासनं समतिलङ्घ्य सन्तिष्ठते ।
समुल्लसितसुन्दरीचिकुरपाशबद्धः क्षणात्
भवेत्स इह वीक्ष्यतामपि पिनाकपाणिः स्वयम् ॥ १६ ॥

इन्द्रः—( सहर्षम् । आत्मगतम् । ) अयमेव हि मे मनोरथः । ( प्रकाशम् । ) श्रूयतां वयस्येन यदधुना हिमाचलसानुनि तपश्चरति शङ्करः शुश्रूषते च तं हिमगिरितनया तद्यदि तस्य तपसि विघातो भवेत् । परिणयेच्च तां पार्वतीं । ततो जितो भविष्यति च तारकः ।

म०—( सचकितं स्वगतम् । ) प्रस्थितस्य मम चरणस्खलनफलमिदं करिणेव स्वबन्धनशृङ्खलं स्वयमेव मयेदमुढं यद्भवति तद्भवतु । ( प्रकाशम् । सावष्टम्भम् । )

चञ्चद्दोर्वल्लिशाखानियमितगलसंलग्नहस्ताङ्गुलीकः
पार्वत्याः स्मेरवक्राद्विगलितचटुलैर्भूरिवीक्षाशरौघैः ।
सम्यग्व्याकीर्णमूर्तिस्तपसि च शिथिलासक्तिरालिङ्ग्य कान्तां
कल्पानल्पेतरान्द्रागयमनुभविता केलिसौख्यं कृशाङ्ग्याः ॥ १७ ॥

तदनुजानातु मामभिलषितसिद्धये भवानिति । ( द्रुतपदं सवसन्तो निष्क्रान्तः । )

इन्द्रः—(बृहस्पतिं प्रति ।) सर्वे वयमपि तदद्भुतनिरीक्षणाय सज्जीभवाम इति । ( यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे । )

## इन्द्रमन्मथसमागमो नाम चतुर्थोऽङ्कः ।

---

# पञ्चमोऽङ्कः ।

( नेपथ्ये । )

ईदो[1] इदो भट्टिणि ।

( ततः प्रविशति मेना )

**मेना**—लवङ्गिए[2], कहिं मे वच्छा पव्वदी वट्टदि ।

**लवङ्गिका**—एदस्सिं[3] काणणे सिलापट्टम्मि चिट्ठन्ती अदिभीसणं चरेइ तवो ।

**मेना**—( उपसृत्य । ) वच्छे[4], ण तुमं ईदिसस्स साहसकज्जस्स जोग्गा ता णिवट्टेहि तवोणि अमं पेक्खस्व तुह णोमाल्लिआकुसुमपेलवा इअं तणुलदिआ कहिं कहिंअ तादिसं अदिमेत्तदुक्खरं तवस्सिअणपरिइदं तवो अविअ सरण्णईविअ दिणे दिणे वि अदिकिसा अदिमेत्तपण्डुराअ दीसइ दे तणुयट्ठी ताआअच्छ गच्छेमो णिअभवणं ।

**पार्वती**—( सलज्जं सविषादं च स्वगतम् । ) जइ[5] अत्तणो पहविस्सं ( प्रकाशम् दीर्घमुष्णं विनिश्वस्य । ) किं मे भवणम्मि वट्टदि कज्जं जा सदिसं वल्लहं अलहन्ती होमि ।

**मेना**—लद्धवईज्जेव[6] सदिसं दइअं णत्थि मे तहिं सन्देहो जं भअवदो णारदस्स वअणं ण कदा वि असच्चं भवे ।

---

१. इत इतो भर्तृनि ।

२. लवङ्गिके कुत्र मे वत्सा पार्वती वर्तते ।

३. एतस्मिन्कानने शिलापट्टे तिष्ठन्ती अतिभीषणं चरति तपः ।

४. वत्से, न त्वमीदृशस्य साहसकार्यस्य योग्या । तत् निवर्तय तपोनियमं प्रेक्षस्व तव नवमालिकाकुसुमपेलवा इयं तनुलतिका कुत्र कुत्र च तादृशं अतिमात्रदुष्करं तपस्विजनपरिचितं तपः अपि च शरन्नदीव दिने दिनेऽपि अतिकृशा अतिमात्रपाण्डुरा च दृश्यते ते तनुयष्टिः, तदागच्छ गच्छामो निजभवनम् ।

५. यद्यात्मनः प्रभविष्यामि किं मे भवने वर्तते कार्यं या सदृशं वल्लभमलभमाना भवामि ।

६. लब्धवत्येव सदृशं दयितं नास्ति मे तत्र सन्देहो यद्भगवतो नारदस्य वचनं न कदाप्यसत्यं भवेत् ।

**पार्वती**—तत्तवि[1] तवोज्जेव कारणं भवे किं विअ दुल्लहं तवसो-होदि अदो मं विसज्जेदु भोदि ।

**मेना**—जइ[2] एव्वं अहं गच्छेमि भवणं कुसलं दे भोदु ( इति लवङ्गिकया सह निष्क्रान्ता । )

**पार्वती**—( ध्यानं नाटयन्ती स्वगतम् । )

णिम्मलफोडअविमले[3] मणसि विलग्गं महेसरं सरणम् ।
गच्छेमि दीणबन्धुं रक्खदु दुरिदम्मि लग्गहि अअं मम् ॥ १ ॥

**लव०**—( ससम्भ्रममागत्य । ) पिअसहि,[4] दिट्ठिआ वड्ढसि मअणो सवमन्दो विण्णवेदि तुमं ।

**पार्वती**—किं[5] ति ।

**लव०**—( संस्कृतमाश्रित्य । ) ममेदं विज्ञापनं तेषु तेषु च भवस्य वेदिसम्मार्जनबलिकुसुमदर्भसलिलाद्याहरणादिशुश्रूणसमयेषु तत्र-भवती पुनः ।

सव्याजं शनकैरुपेत्य गिरिशं चारुस्मितं कुर्वती
नीवीं विश्लथितां विधाय चतुरं संयोजयन्ती पुनः ।
वक्षस्याहितमुत्तरीयमसकृद्विश्लिष्टमादर्शयेत्
साकूतं मधुरं च मञ्जुलवचो जल्पन्त्यमुं हर्षयेत् ॥ २ ॥

---

१. तत्रापि तप एव कारणं भवेत् किमिव दुर्लभं तपसो भवति अतो मां विसर्जयतु भवती ।

२. यद्येवं अहं गच्छामि भवनं, कुशलं ते भवतु ।

३. निर्मलस्फटिकविमले मनसि विलग्नं महेश्वरं शरणम् ।
गच्छामि दीनबन्धुं रक्षतु दुरिते लग्नहृदयं माम् ॥

४. प्रियसखि, दिष्टया वर्द्धसे मदनः सवसन्तो विज्ञापयति त्वाम् ।

५. किमिति ।

ता पिअसहि, अप्पमत्तादाणिं होहि । सिवो वि एत्थ ज्जेव णन्दीसरेण समं किंवि आलवन्तो आअच्छदि ।

( इति परिक्रम्य निष्क्रान्ता लवङ्गिका । )

इति चूलिका ।

( ततः प्रविशति शम्भुः नन्दीश्वरश्च । )

**शम्भुः**—( नन्दीश्वरमवलोक्य । ) पश्य यदुच्यते श्रेयांसि बहुविघ्नानीति तत्सत्यमेव वचः मम हि सम्प्रति ।

सम्यग्ध्यानपरस्य संसृतिपथे गत्वा विरक्तिं परां
सत्ये ज्योतिषि चिन्मये विलगतः स्वानन्दभाजः परम् ।
विक्षेपा बहवो भवन्ति हि मुहुः शैले तपस्तन्वतो-
ऽप्येवं चेद् गृहिणां कथं भवति निर्विघ्नं समाधिश्रियम् ॥ ३ ॥

तत्सततमपि तपस्येव निरवधिकमानन्दमनुभवामि ।

**नन्दीश्वरः**—देव, सज्जीकृतं सर्वमेव तपस्साधनं तद्भगवाननुभवतु समाधिं अहमपि बहिरस्मिन्विपुलगण्डशैलोपरि निषण्णः न कश्चिदप्यन्तः प्रवेशयामीति । ( निष्क्रान्तः । )

**शम्भुः**—( ध्यानं नाटयति । )

( ततः प्रविशति मन्मथः । )

**मन्मथः**—( वसन्तं प्रति । )

एतत्सरस्समदसारसचक्रवाक-
नत्यूहहंसविरुतैः परितः सशोभम् ।
कारण्डवैश्च[2] सलिलेष्वनिशं प्लवद्भिः
उत्फुल्लपङ्कजनदद्भ्रमराभिवुष्टैः ॥ ४ ॥

इदमपि पुरतः कुसुमितकुरबकमाकन्दचम्पकनवमालिकादिभिर-

१. तत्प्रियसखि, अप्रमत्तेदानीं भव शिवोऽप्यत्रैव नन्दीश्वरेण समं किमप्यालपन्नागच्छति ।

२. जलकाकैः ।

द्रविडभाषायां ( नत्तुपुल )

लङ्कृतं अभिनवकिसलयरसास्वादमदनृत्यत्कलकण्ठकण्ठरज्यत्पञ्चमोदञ्चितैश्च अतिरमणीयमरण्यं भवति। तदत्रैव कस्यचिच्चम्पकवृक्षस्य मूले समुपविष्टः समयं प्रतिपालयामि। सच शम्भुरत्रैव गुहानिषण्णस्तपस्यतितराम् ।

सोऽयं शम्भुर्भजति महतीं योगनिष्ठां पुरस्तात्
श्वासैरन्तर्भरितविलसत्काष्ठनिष्पन्दगात्रः ।
षष्ठाधारे विलगति मनः साम्प्रतं धारणाया
अत्यारूढ्या भवति हि पुनर्निर्विकल्पः समाधिः ॥ ५ ॥

(परितोऽवलोक्य सहर्षम् ।)

इतोऽपि सविधे पुरश्चरति दर्पणे निर्मले
हसन्मृदुलसंस्फुरद्रुचिकपोलयुग्मान्विता ।
इयं कुटिलकुन्तला ललितगात्रयष्टिर्मुहुः
झणत्कनकभूषणा कलिततोषणा पार्वती ॥ ६ ॥

तदधुना शोभनमालब्धमालम्बनम् ।

(ततः प्रविशति आकाशयानेन चित्रसेनः चारुहासिनी च ।)

**चित्रसेनः**—प्रिये, पश्य कथमत्रैवागच्छति महेन्द्रो बृहस्पतिः सर्वे देवा महर्षयश्च तदत्रैव रहसि कस्मिंश्चित् स्थाने स्थित्वा विलोकयावः किं प्रतिपद्यते मन्मथः स शङ्करश्च ।

(ततः प्रविशति इन्द्रः बृहस्पतिः सर्वे देवा महर्षयश्च। )

**इन्द्रः**—(सहर्षम् ।)

इतश्चरति पार्वती चलितगात्रयष्टिर्भयात्

**बृहस्पतिः**—(सविस्मयं निरूप्य ।)

इतोऽपि मधुरीक्ष्यतां सपदि जृम्भते कानने ।

**इन्द्रः**—(सहर्षं सस्नेहं च ।)

इतो धनुषि मन्मथः शरवरं विधत्तेऽप्यसौ

---

धारणायाः मनोबुद्ध्यहङ्कारैक्यस्य षष्ठाधारे भ्रूमध्ये। तथा च। नाभेरधः मूलाधारः उपरि स्वाधिष्ठानं तदुपरि मणिपूरकं वक्षसि अनाहतं कण्ठे विशुद्धिः भ्रूमध्ये आज्ञेति योगविदः ।

**बृहस्पतिः**—( साशङ्कम् । )

इतोऽपि खलु शंकरश्चलितमानसस्तत्क्षणात् ॥ ७ ॥

**शम्भुः**—( सरोमाञ्चं सगद्गदञ्च पार्वतीं प्रति । )

प्रिये कुटिलकुन्तले रुचिरचारुमन्दस्मिते
मनो हरसि शोभने चटुलवीक्षणैस्तत्क्षणात् ।
ममाङ्कमिह सत्वरं पृथुनितम्बभारानते
भजस्व भुजशाखया सपदि कण्ठमालिङ्ग मे ॥ ८ ॥

**पा०**—( लज्जते । )

**शम्भुः**—( सानुरागम् । )

अयं मलयमारुतः कमलसौरभामोदितो
हरत्यधिकशीतलो हृदयमद्य निर्भिद्य मे ।
दलन्मृदुलमल्लिकाचलितभृङ्गझङ्कारतो
भवामि भृशपीडितो भव ममौषधं सुन्दरि ॥ ९ ॥

( इति सरभसमालिङ्गितुमुत्थाय स्वगतम् । ) अहो प्रमादः किमिदं समयाविरुद्धमारब्धं किन्नु खलु मे नियमितसर्वेन्द्रियस्य हृदयमदकारणं भवेत् भवतु निरूपयामि । ( इति पुरतो मन्मथमवलोक्य । सक्रोधम् । ) अये मूर्ख, विरहिजनमारणसम्पादितविविधकिल्बिषमलिनबुद्धे कन्दर्प, कथं मय्यपि ते पौरुषातिशयः ( इति चटुलपदं धावति । )

( नेपथ्ये । )

हाधिक् हाधिक् अब्रह्मण्यं अब्रह्मण्यं परित्रायध्वं परित्रायध्वं मे प्रियवयस्यम् ।

वेगात्समापतति सोऽयमतीव रुष्टः
कालाग्निरुद्रवपुरेत्य भयङ्करं नः ।

**इन्द्रः**—अहो धिक् प्रमादः वसन्तस्येव ध्वनिः श्रूयते

**बृह०**—( सविषादम् । ) यावद्वयं सरभसं शिवमभ्युपैमः

---

१. योगत इत्यध्याहार्यम् ।

इन्द्रः—किं तर्हि ।

बृह०—

तावत्स्फालनयनानलभस्मितोऽभूत् ॥ १० ॥

हरः पुनरिदानीमतिरोषणो वर्तते तदन्तर्हिता भवामः । वसन्तमुखेन रतिमानीय पश्चाद्भवमभ्यर्थयाम । (इति तिरोहिताः सर्वे अवर्तन्त।)

(ततः प्रविशति आमनस्था रतिः नवमालिका च ।)

रतिः—(सोद्वेगम् ।) [1]हला णोमालिए, कहं चिराअदि मे पाणवल्लहो खणं वि मए विणा ण स धारेदि जीविदं ।

नवमालिका—[2]पिअसहि पबलं खु महेन्दस्स कज्जं ता विलम्बीअदि तेण ।

रतिः—[3]गदाए रअणीए किं वि हिअअभीसणं सिविणं दट्ठूण रणरणजुत्तं वेवदि मे हिअअं ।

नव०—[4]पडिहदं अमङ्गलं भोदु होदी रिवुजणस्सवि माभोदु सिवेदरं ।

रतिः—(हृदयार्पितहस्ता ।) [5]पिअसहि, किं करेमि डहिज्जइ मे जडरं सुण्णं भोदि णअणं ता धारेहि मं । (इति सख्या उरसि संलग्ना पुरतोऽवलोक्य ससम्भ्रमं सकम्पं च ।) हद्धी हद्धी अम्मो पिअसहि, कहं अज्जउत्तेण विणा आअच्छदि पिअवअस्सो वसन्दो सव्वहा किं वि अच्चाहिदं भवे ता परित्ताएहि परित्ताएहि मं (इत्युत्तिष्ठति ।)

---

१. हला नवमालिके, कथं चिरायते मे प्राणवल्लभः क्षणमपि मया विना न स धारयति जीवितम् ।

२. प्रियसखि, प्रबलं खलु महेन्द्रस्य कार्यं तद्विलम्ब्यते तेन ।

३. गतायां रजन्यां किमपि हृदयभीषणं स्वप्नं दृष्ट्वा रणरणयुक्तं वेपते मे हृदयम् ।

४. प्रतिहतममङ्गलं भवतु भवती रिपुजनस्यापि मा भवतु शिवेतरत् ।

५ प्रियसखि, किं करोमि दह्यते मे जठरं शून्यं भवति नयनं तद्धारय माम् । हाधिक् हाधिक् अम्मो । प्रियसखि, कथमार्यपुत्रेण विना आगच्छति प्रियवयस्यो वसन्तः सर्वथा किमपि अत्याहितं भवेत् तत् परित्रायस्व परित्रायस्व माम् ।

**नव०**—पिअसहि,[1] मा उत्तम्म मा उत्तम्म तुह परिहासत्थं वुक्खन्तरिदो भवे ।

**रतिः**—[2]कदा वि ण स मं पदारिअवन्तो अहं जाणामि तस्स हिअअं ।

(प्रविश्य ।)

**वसन्तः**—(दूरादेव सकरुणं सविक्लवं च ।) प्रियसखि, प्रियसखि चण्डालं पापं मित्रघातिनं मां मावलोकयतु भवती ।

यस्याद्य जीवितमिदं सहसैव तादृक्-
स्निग्धं विहाय च न गच्छति वज्रसारम् ।
पापोऽहमत्र भुवने जनगर्हणीयः
वह्नौ प्रविश्य निजदुःखमहं त्यजेयम् ॥ ११ ॥

(इति मुक्तकण्ठं रोदिति ।)

(रतिः ससंभ्रमं स्रगलङ्करणादिकं विक्षिप्य सोरस्ताडनं पतित्वा धरण्यां मूर्छति ।)

**नव०**—(ससंभ्रमं सकरुणं च उत्थाप्य सलिलेन चक्षुषी हृदयं च समुक्ष्य साशङ्कम् ।) पिअसहि,[3] तुमं वि अह्मे मोत्तूण कहिं गच्छसि ता देहि मे पडिवअणं (इति रोदिति ।)

**रतिः**—(चिरेण संज्ञां लब्ध्वा ।) पिअसहि,[4] मुञ्च मं खणं वि णत्थि मे जीविदेण फलं (ससंभ्रममुत्थाय वसन्तस्य कण्ठमाश्रित्य संस्कृतमाश्रित्य सगद्गदम् ।) वसन्त, क्व ते गतः प्रियवयस्यः यः क्षणमपि न मुञ्चति भवन्तं किं मन्दभागिन्यै मह्यं कुप्यति प्राणनाथः न कञ्चिदप्यपराधमहमुपलक्षये ।

नाहं कदाचिदपि तस्य विरोधकारि-
ण्यासं सदैव दयिता च मनोऽनुकूला ।

---

१. प्रियसखि, मा उत्तम्य मा उत्तम्य तव परिहासार्थं वृक्षान्तरितो भवेत् ।

२. कदापि न स मां प्रतारितवान् अहं जानामि तस्य हृदयम् ।

३. प्रियसखि, त्वमप्यस्मान्मुक्त्वा क्व गच्छसि तद्देहि मे प्रतिवचनम् ।

४. प्रियसखि, मुञ्च मां क्षणमपि नास्ति मे जीवितेन फलम् ।

सोऽप्यादरान्मम न किञ्चिदपि व्यलीकं
स्वप्नेऽपि हन्त कृतवान्किल साधुशीलः ॥ १२ ॥

तस्मात्सत्यं कथय क्व ते गतः प्रियवयस्यः कदा मामाह्वयेत्सादरं प्रेयसीति ।

**वसन्तः**—प्रियसखि, किं करोमि मन्दभाग्यः महेन्द्रेण प्रेषितावावां तपस्यतः शम्भोर्नियमविघाताय हिमाचलं प्रस्थितौ सपदि वयस्येन संयोजिते च कार्मुके कुसुमसायके ।

**रतिः**—( सकरुणं विनिश्वस्य । ) तँदोतदो ।

**वसन्तः**—चटुलपदमागच्छतश्च हरस्य नयनानलेन ( स वाक्स्तम्भं निश्वस्य । ) प्रियसखि, संस्तभ्यात्मानं शृणु, शलभ इव तत्क्षणात् भस्मीकृतः प्रियवस्यः ।

**रतिः**—( पुनरपि मूर्छति । )

**वसन्तः**—( अङ्गं परिमृजन् । ) समाश्वसिहि समाश्वसिहि प्रियसखि,

**रतिः**—( संज्ञां लब्ध्वा सोन्मादं सत्वरं गत्वा । )

आगत्य मत्पतिरसौ पुरतोऽत्र चापे
बाणं च योजयति सस्मितवीक्षणेन ।

( सप्रत्यभिज्ञम् । )

हा हन्त सम्प्रति हि धूर्जटिलोचनाग्नि-
दग्धः कथं पुनरुपैति भुवं स नाथः ॥ १३ ॥

तत्सम्प्रति अहमपि तस्मिन्नेव तल्लोचनाग्नौ विसृजामि निजदेहमिति ( वसन्तनवमालिकाभ्यां सह प्रस्थिता । )

( नेपथ्ये । )

इदो भट्टिणि ।

( ततः प्रविशति लवङ्गिकया सह मेना । )

**मे०**—लँवङ्गिए कहेहि कहिं मे वच्छा पव्वई वट्टदि ।

---

१. ततस्ततः ।

२. इतो इतो भट्टिनि ।

३. लवङ्गिके, कथय कुत्र मे वत्सा पार्वती वर्तते ।

लव०—एत्थं ज्जेव सङ्करगुहाणिअडे संचिअकट्ठसअणे अग्गिं पज्जलेदि ।

मेना०—( सत्वरं धावन्ती । ) हद्धी हद्धी वच्छे, पव्वइ मुञ्च मुञ्च इदं साहसकज्जं आअच्छादि दे पिदा ।

( ततः प्रविशति हिमवान् । )

हिम०—अहो धिक् कष्टं कष्टम् ।

दिष्ट्या हरं किल सुता परिणेष्यतीति
श्रुत्वा तु नारदवचो गिरिशे हि क्लृप्ता ।
भूयोऽपि सम्प्रति विषादमुपागतेऽयं
दुःखं हि हन्त भुवि भूरि पितुः कुमार्याः ॥ १४ ॥

( सत्वरमागत्य बलादेनां निवर्तयन् । ) कथमत्रैव इन्द्रादयो देवा महर्षयश्च ।

( ततः प्रविशति सपरिवार इन्द्रः । )

इन्द्रः—( बृहस्पतिं प्रति । ) अमरगुरो किं कर्तव्यमिदानीम् ।

बृह०—सर्वलोकशरण्यं बदरीनारायणमेव ब्रह्माणं पुरस्कृत्य शरणमधिगच्छामः । ( पुरोऽवलोक्य सविस्मयम् । )

सोऽयं हि दुग्धजलधौ रमया विहारी
वैकुण्ठ एष रमते कमलासहायः ।
अत्रापि सर्वजनताकुशलाय शैले
नित्यं तपश्चरति मूर्त्तियुगं स बिभ्रन् ॥ १५ ॥

कथमित एवागच्छति ब्रह्मणानुगम्यमानः नरेण सह किमपि सञ्जपन् नारायणः । ( पुनर्निरूप्य सविस्मयम् । )

लक्ष्म्याश्लिष्टमुरः सकौस्तुभमिदं शोभायमानं स्रजा
केयूरोज्ज्वलहारकुण्डलशुभग्रैवेयकाढ्यं वपुः ।

---

१. अत्रैव शङ्करगुहानिकटे सञ्चितकाष्ठशयने अग्निं प्रज्वलयति ।

२. वत्से पार्वति, मुञ्च मुञ्च इदं साहसकार्यं आगच्छति ते पिता ।

शङ्खं चक्रगदासिशार्ङ्गमपि योबिभ्रत्करैर्दक्षिणे
हस्ते चाप्यभयान्वितः सरभसं तार्क्ष्याधिरूढोऽप्यभूत् ॥ १६ ॥
कथमितोऽपि दक्षस्य पत्नी मुक्तकेशा समागच्छति ।

( ततः प्रविशति दक्षपत्नी । )

**दक्षपत्नी**—किं[1] मह भुवणम्मि जीविदेण फलं जा मन्दभाइणी तादिसेण भत्तुणा पुत्तीए अ झडिइ विरहिआ मए उण आंकण्णिअं णारदमुहादो मह वच्छा पव्वदराअदुहिदाभविअ वड्ढदित्ति ता तहिं गच्छेमि अकारणपरिच्चत्तां दुहिदरं आमन्तिअ पच्छा पविसेमि जोलणं । ( इति परिक्रम्य पुरतोऽवलोक्य साशङ्कम् ।) केउण एदे जोलणं पविसन्तिं कुमारिं णिब्बन्धन्तो चिट्ठन्ति भोदु पुच्छिस्सं। दावएदे (इत्युपसृत्य स्वगतम् ।) इअं पव्वई अग्गिं पविसादि हद्धी हद्धी ( प्रकाशम् । ) वच्छे,विरम विरम इदो साहसकज्जादो ।

**हिम०**—वत्से, इयमपि ते पूर्वजननी वारयति त्वाम् ।

**पार्वती**—किं[2] मे दुक्खशीलाए जीविदेण एक्काए मह अधण्णदाए सव्वेवि भवन्तो खिज्जन्ति ।

**दक्षपत्नी**—वच्छे[3],अलं एक्कवारं पाणविसज्जणेण । ( इति वारयति । )

**पार्वती**—( पुरोऽवलोक्य । ) कहं[4] एत्थजेव आअच्छदि मह उव-

१ किं मम भवने जीवितेन फलं या मन्दभागिनी तादृशेन भर्त्रा पुत्र्या च झडिति विरहिता मया पुनराकर्णितं नारदमुखात् मम वत्सा पर्वतराजदुहिता भूत्वा वर्द्धत इति तत्तत्र गच्छामि अकारणपरित्यक्तां दुहितरमामन्त्र्य पश्चात्प्रविशामि ज्वलनम् । के पुनरते ज्वलनं प्रविशन्तीं कुमारीं निर्बध्नन्तस्तिष्ठन्ति भवतु प्रक्ष्यामि तावदेतान् । इयं पार्वती अग्निं प्रविशति । हाधिक् हाधिक् वत्से, विरम विरम इतः साहसकार्यात् ।

२ किं मे दुःखशीलाया जीवितेन एकस्या मम अधन्यतया सर्वेऽपि भवन्तः खिद्यन्ति ।

३ वत्से,अलं एकवारं प्राणविसर्जनेन ।

४ कथमित एव आगच्छति ममोपकारिणो मदनस्य दयितापि वसन्तनवमालिकासहिता भवतु क्षणं विलम्बे ।

आरिणो मअणस्स दइआ वि वसन्दणोमालिआसहिदा भोदु खणं विलम्बेमि । (इति चिन्तयन्ती स्थिता ।)

(ततः प्रविशति यथानिर्दिष्टा रतिः ।)

**रतिः**—( द्रुतमागत्य सावेगम् । ) वसन्द[1] दंसअ दे वअस्सस्स भसिअं ।

**वसन्तः**—( पुरतो गत्वा सास्रम् ) यदिदं शम्भुगुहाद्वारे कपोतकर्बुरं दृश्यते । ( इत्यङ्गुल्या निर्दिशति । )

**रतिः**—( ससम्भ्रमं तदुपरि निपत्य संस्कृतमाश्रित्य । ) हा प्राणनाथ,वसन्तवयस्य,विलपन्त्या देहि मे प्रतिवचनं किं मन्दभागिन्यै मह्यं कुप्यति भवान् तदागत्य शिक्षय माम् ।

उत्तिष्ठ ते वक्त्रसरोजमादरात्
सन्दर्शय प्राणसखीं विलोकय ।
किं लज्जसे व्यर्थमुदीरितं मया
द्रुतं समेष्यामि तवान्तिकं त्विति ॥ १७ ॥

न खलु लज्जितव्यं भवता ।

तथापि कर्णाभरणीकृतं पुरा
सरोजमप्यत्र न चाहृतं मया ।
त्वयैव सर्वः खलु भद्रमश्नुते
त्वमेयिवानीदृशभस्मरूपताम् ॥ १८ ॥

केमिह रुदितेन तमेव शम्भुं शरणमुपैमि सर्वथा परमदयालुः श्रीमन्नारायण एव रक्षतु मामिति । ( शम्भुमुपसृत्य नातिदूर एव धरण्यां निपत्य । ) दीनदयालो,मर्षयतु देवः एकवारं मम नाथेन कृतमपराधमिमम् । ( इति रोदिति । )

( ततः प्रविशति लक्ष्म्यासमेतो नारायणः ब्रह्मादयः सर्वे देवा महर्षयश्च । )

**नारायणः**—

एष स्थाणुरुपेत्य संसृतिपथे वैराग्यकाष्ठां परां
स्थानं च स्वतपोऽनुरूपमधिगम्याद्रीश्वराधिष्ठितः ।

---

१ वसन्त,दर्शय ते वयस्यस्य भसितम् ।

भस्मीकृत्य च मन्मथं तदधुना सिद्धार्थ एव स्वयम्
भूयो दारयुतोऽपि मारजिदति स्वानन्दमेवाप्नुयात् ॥ १९ ॥

एष इदानीम् ।

निर्वेदात् परमानन्दं गच्छन्नपि गिराविह ।
न तृप्तिं समवाप्नोति विदन् संसारहेयताम् ॥ २० ॥

(ब्रह्मादीन्प्रति ।) इदमत्र अद्भुतं संविधानं पश्यन्तु भवन्तः ।

**ब्रह्मा**—न किंचिद्भवति दुर्लभं भगवतः कटाक्षस्य

**नारा०**—

दक्षस्य भार्यापि रतिश्च भामि-
न्यन्ये च सर्वे शुभबन्धुवर्गाः ।
शिवस्य कल्याणमिहेक्षमाणा
दधत्यमन्दां मुदमद्य शीघ्रम् ॥ २१ ॥

तद्वयमेवेदानीं शम्भुमनुनेष्यामः । (इति सत्वरमुपसर्पति ।)

**शम्भुः**—(भगवन्तमवलोक्य सरभसमुत्थाय ।)

ब्रह्मादिसर्वरूपाय जगन्मङ्गलकारिणे ।
सृष्टिस्थित्यन्तमूलाय नारायण नमोऽस्तु ते ॥ २२ ॥

(इति प्रणमति ।)

**नारा०**—(आदाय आलिङ्ग्य च ।)

कुशलं भवते भूयान्मम रूपमुपेयुषे ।
भक्तानां पापनाशाय लीलाविधृतमूर्तये ॥ २३ ॥

रतिः किल सुदुःखिता लुठति भूतले सांप्रतं
चिराय भृशविह्वला भवति दक्षपत्न्यप्यसौ ।
प्रवेष्टुमिह सत्वरं व्रजति पार्वती पावकं
तदद्य कृपया भवान्परिणयोत्सवं सेवताम् ॥ २४ ॥

**शम्भुः**—अनुगृहीतोऽस्मि भगवता किन्तु निवृत्तविषयाभिलाषस्य पुनरपि दारपरिग्रहे लज्जते मे हृदयम् । किंच । योऽहं मदनमि-

दानीमधाक्षं पुनरपि तद्वशंवदो यदि भवेयं तदपि महत्परिभवस्थानम् ।

**नारा०**—न किंचित्परिहीयते जगति प्रख्यापनाय पृच्छति भवान् ।

कुतः स्वाधीनमायानामस्माकं गृहमेधिता ।
लोकानां रक्षणायैव दाम्पत्यं बिभृमो वयम् ॥ २५ ॥

तदस्मिन्नेव शुभे मुहूर्ते पुरापि मया बहुशोऽनुभूते भवतु भवतो झडिति परिणयविधिर्हिमगिरितनयायाः ।

**शम्भुः**—किमधुना मया कर्तव्यं तदादिशतु भगवान् ।

**नारा०**—प्रथमं मन्मथं जीवयतु भवान् पश्चाद् दक्षप्रभृतीन्मखभुवि विध्वस्तान् । (इत्यूर्ध्वं अवलोकयन् ।)

किमम्बरे ताड्यत एष दुन्दुभि-
भवत्यपि द्रागिह पुष्पवर्षणम् ।
सतूर्यनादं शुभशिञ्जितं मुहुः
प्रनृत्यते चापि मुदाप्सरोगणैः ॥ २६ ॥

(प्रविश्य सहर्षम् ।)

**वसन्तः**—

यदा च देवी रतिरत्र भूमौ जवेन शम्भुं शरणं प्रपन्ना ।
तदैव सुप्तोत्थिततुल्य एष कामोऽपि संश्लिष्य रतिं प्रहृष्टः ॥ २७ ॥

**पार्वती०**—पिअं णो । पि अं णो[1]

(ततः प्रविशति रत्या सह सविनयं मन्मथः ।)

**मन्मथः**—(रतिवसन्ताभ्यां सह शम्भुं प्रणम्य ।)

नाहं भवन्महिमतोयधिशीकराणां
जानामि रूपमयमेकतमस्य वापि ।
तेनापराधमसकृद्वचसा च कृत्यैः
कृत्वाद्य भङ्गमतुलं गतवान् क्षमस्व ॥ २८ ॥

---

१ प्रियं नः । प्रियं नः

हरये जलजाक्षाय ब्रह्मणे पद्मयोनये ।
इन्द्रादिसर्वदेवेभ्यो महर्षिभ्यो नमो नमः ॥ २९ ॥

**नारा०**—

भूकिङ्करो भव हरस्य सदा समेतः
रत्या समं च सुहृदा विहरस्व लोके ।
केषांचिदेव भवदीयमिदं हि रूपं
प्रत्यक्षमस्तु भुवने भवितास्यनङ्गः ॥ ३० ॥

( नेपथ्ये महान् कलकलः । )

**नारा०**—नन्दीश्वर, किमिदं ज्ञायताम् ।

**नन्दी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य पुनः प्रविश्य । सविस्मयम् । ) देव, दक्षभृगुप्रभृतयो ये मखविध्वस्तास्ते सर्वेऽपि भगवत्कृपया लब्धयथावस्थितमूर्तयः हिमवदादिभिश्च मिलिता भवतः सर्वानपि नमस्कर्तुमागच्छन्ति ।

**नारा०**—यथेच्छमागच्छन्तु सर्वे च पार्वतीपरिणयमभिनन्दन्तु ।

( ततः प्रविशन्ति यथानिर्दिष्टा दक्षप्रभृतयः । )

**दक्षः**—( स्वपत्नीमवलोक्य । ) एह्येहि प्रिये, महोत्सवमभिनन्दामः । ( परावृत्य । ) अचलाधीश्वर, यदुच्यते सम्पदमनुबध्नन्ति सम्पद इति तत्सत्यम् । मम हि चिरेण विपन्नस्य अनया प्रेयस्या भवदादिभिश्च सुहृद्भिः युगपदेव मेलनं श्रीमन्नारायणादिसन्दर्शनं पार्वतीपरिणयाभिनन्दनं चेति एकैकमपि न पर्याप्तं हर्षविजृम्भणस्य । तदत्र सर्वे देवाः सदसि हि दृश्यन्ते वयमपि शम्भुमुपास्महे । ( इति सत्वरमागम्य श्रीभगवन्तं ब्रह्माणं च सह पत्न्या प्रणम्य शम्भुनिकटमागच्छति । )

**शम्भुः**—( ससम्भ्रममुत्तिष्ठति । )

**दक्षः**—( हस्तौ गृहीत्वा । )अलमलमुपचारनियन्त्रणया ।

अपराद्धं मया पूर्वं भवति ब्रह्मरूपिणि ।
श्वशुरत्वाभिमानेन तत्सर्वं क्षम्यतामिह ॥ ३१ ॥

**नारा०**—( दक्षमवलोक्य । ) अवगतं खलु सर्वं भवता तदद्वेषेणैव भवितव्यम् सर्वत्र पश्यतु भवान् ।

अद्वेष एव सर्वत्र ब्रह्म पश्यन् हि पण्डितः ।
फलं चानभिसन्धाय कर्म कुर्वन्न लिप्यते ॥ ३२ ॥

( हिमवान् मेनया सह प्रणमति । )

**नारा०**—कल्याणं भवतु हिमाचल तर्हि त्वर्यतां त्वर्यतां आहूयतां पार्वती कल्याणवेदिकायां वधूवरावुपवेशयतु भवान् अथवा अहमेव उपवेशयामि । ( इति निष्क्रान्तः । )

( नेपथ्ये । )

**नारदः**—

सर्वे देववरास्तथैव मिलिता गन्धर्वविद्याधराः
शैलाश्चापि महर्षयः प्रमुदिताः संवीक्ष्य गौर्युत्सवम् ।
नृत्यन्त्यप्सरसश्च तूर्यमुरजारावैः समं व्योमनि
स्मेरास्याः कुलपालिकाश्च विविधं नीराजयन्त्यङ्गनाः ॥ ३३ ॥
यत्रोत्सवे रमानाथो ब्रह्मेन्द्रादिमरुद्गणाः ।
धुरं वहन्ति शम्भोर्हि तत्कल्याणं किमुच्यते ॥ ३४ ॥

( बहिरागत्य सर्वे सन्तोषं नाटयन्ति । )

**हिम०**—( परिवृत्य । ) इदं अङ्गुलीयकं प्रतिगृह्णातु भगवान् । ( इति पार्वत्यङ्गुल्याः शम्भुं प्रतिग्राहयति । )

( शम्भुः पार्वत्या सह लक्ष्मीनारायणौ ब्रह्माणं सरस्वतीं च प्रणमति । )

**नारा०**—( सस्मितम् । )

भवान् स्वयं शङ्करोऽसौ पार्वती सर्वमङ्गला ।
किमाशिषा जगच्छूरं लभेथां पुत्रमञ्जसा ॥ ३५ ॥

**ब्रह्मा**—अस्माभिरपि तदेवाभिनन्दितम् ।

**लक्ष्मीः**—( पार्वतीमालिङ्ग्य । ) वच्छे, दइदस्स अद्धसरीरवासिणी होहि ।

---

१ वत्से, दयितस्य अर्धशरीरवासिनी भव ।

**सरस्वती**—उच्छाहजुत्तो जो भोदि सव्वदा वि विग्घणिवारणे तादिसं गअवअणं पुत्तअं सिग्घं उप्पादेहि ।

**नारदः**—आश्चर्यं आश्चर्यम् ।

लक्ष्मीवचनतः शम्भुरर्धनारीशतां गतः ।
दिवोऽपि तारकं हत्वा स्कन्दः स्वयमिहागतः ॥ ३६ ॥

**इन्द्रः**—प्रियं नः प्रियं नः ।

( ततः प्रविशति सुब्रह्मण्यः पितरौ प्रणम्य नारायणादीन् यथोचितं प्रणमति । )

**शम्भुः**—( सादरम् । ) एह्येहि वत्स, पितरावालिङ्गय आवाम् ।

**सुब्रह्मण्यः**—तथा करोति ।

**इन्द्रः**—कथमस्मदीयसैन्यमनपेक्ष्यैव कुमारेण जितः स तारकः किमिव दुर्लभं भवति भगवता कृतनामधेयस्य जगदेकशूरस्यास्य ।

**शम्भुः**—महेन्द्र, अभिषिच्यतां वा देवसैनापत्ये कुमारः ।

**इन्द्रः**—कः संशयः अहमभिषेचयामि । ( इति सर्वैरपि देवसमूहैरभिषेचयति । )

( नेपथ्ये मङ्गलध्वनिः । )

**इन्द्रः**—इदानीं फलितोऽस्मन्मनोरथः अमरराज्यभरणक्लेशोऽपि लघूकृतः ।

( प्रविश्य । )

**विदू०**—ही, ही, सामिणो संसारसुहं उवेक्खन्तस्स मम्मह-परिपन्थिणो वि दारपरिग्गहेण पुत्तो वि समुप्पण्णो स सत्तुसूदणो अ आसी कहं इदो वि जेट्ठसुदो गअवअणो मह उच्छाहवड्ढणो चिट्ठइ । ( सर्वे हसन्ति । )

---

१. उत्साहयुक्तो यो भवति सर्वदापि विघ्ननिवारणे तादृशं गजवदनं पुत्रकं शीघ्रमुत्पादय ।

२. हीही स्वामिनः संसारसुखमुपेक्षमाणस्य मन्मथपरिपन्थिनोऽपि दारपरिग्रहेण पुत्रोऽपि समुत्पन्नः स शत्रुसूदनश्च आसीत् कथमितोऽपि ज्येष्ठसुतो गजवदनो मम उत्साहवर्धनस्तिष्ठति ।

**शम्भुः**—धिङ्मूर्ख, सर्वदापि आत्मनि रममाणस्य दाक्षायणीविरहात् व्यक्तमभवत् तपः । इदानीं तु तस्या एव पार्वतीरूपेणावतीर्णायाः सङ्गतिरभिलषितैव । पश्य ।

यस्याः कटाक्षलेशेन बहवो योगिनोऽभवन् ।
भवन्ति च भविष्यन्ति तद्योगः किमु निन्द्यते ॥ ३७ ॥

**बृह०**—न निन्द्यते किं तु सर्वैरप्यभिनन्द्यते ।

जगद्विडम्बनायैव मूर्तिद्वयमुपागतौ ।
युवां यदि विनिन्देत स भ्रश्यति हि वर्त्मनः ॥ ३८ ॥

**नारा०**— शम्भो,

दक्षाद्या भृगुचन्द्रसूर्यमिलिताः सर्वे स्वरूपं गताः
जित्वा मन्मथमेत्यशैलतनयां पुत्रः समुत्पादितः ।
सैनापत्यमपीह देवनिवहैः स्कन्दे समावेशितम्
पार्वत्या सममेव भूरि तपआसक्तो भवान् वर्द्धते ॥ ३९ ॥

तदद्य किन्ते भूयः प्रियमुपहरामि ।

**शम्भुः**—किमिह लब्धव्यमितः परमप्यस्ति कमलानिलयस्य भगवतः कृपया सर्वमप्यधिगतं मया । तथापि इदमस्तु भरतवाक्यम् ।

स्निह्यन्तु स्वयमेव पण्डितवरा मात्सर्यमुत्सार्यताम्
देशानामुपरि क्षमाभृदधिकं पक्षेण जीयाच्चिरम् ।
ताटस्थ्यं भजतामपीह सुधियां तत्त्वं समुज्जृम्भतां
काले वर्षतु सस्यवृद्धिकरणायेन्द्रो मही वर्द्धताम् ॥ ४० ॥

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

मन्मथजयो नाम पञ्चमोऽङ्कः ।

**इति श्रीवेङ्कटराघवाचार्यप्रणीतं मन्मथविजयाभिधानं नाटकं सम्पूर्णम् ।**

शुभमस्तु श्रीमते हयग्रीवाय नमः श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

# शुद्धिपत्रम्।

| अशुद्धम्। | शुद्धम्। | पत्रे। | पङ्क्तिः। |
|---|---|---|---|
| घुमघुमि | घुमुघुमित | १ | १९ |
| न्दि | न्ति | ३ | १० |
| संप्रति | सप्रति | ५ | १० |
| स्वस्व | स्व | ५ | २७ |
| सर्वधा | सर्वथा | ११ | ४ |
| वोत्ति अ | वोत्तिअ | १५ | ७ |
| काश्य पेति | कश्यपेति | १५ | १८ |
| हे भीरुअ | देभीरुअ | १६ | १३ |
| कहिं ए | कहीं | १७ | ५ |
| फुक्कुव्वाणो | फुक्कुव्वन्तो | २१ | १६ |
| साधिणं सादिणं | सादिणं | २४ | ५ |
| हंसणो | दंसणो | २४ | ६ |
| भावयेयुषो: | भावमेयुषो: | ३१ | २४ |
| लमपि | मपिता | ३७ | २४ |
| तत्पिता | तस्यपिता | ४१ | २८ |
| ललाटस्वेदबिन्दो: | ललाटात् | ४१ | २९ |
| हि अअ | हिअअ | ४५ | १२ |
| रणरण भरिअं | रणरणअभरिअं | ४६ | ८ |
| रणरण भरितं | रणरणकभरितं | ४६ | २६ |
| मि इति | मीति | ४७ | २७ |
| साऽयं | साऽसौ | ४८ | १२ |
| साहाय्याद | साहाय्येना | ४८ | २५ |
| त वोणि अमं | त वोणिअमं | ५० | ९ |
| भोदि | भोदो | ५१ | ३ |
| लग्गहि अअं | लग्गह्नि अअं | ५१ | ८ |
| शुश्रूण | शुश्रूषण | ५१ | १३ |
| नत्तुपुल् | नत्तुप्पुल् | ५२ | २८ |
| मभ्यर्थयाम | मभ्यर्थयाम: | ५५ | ६ |
| दट्ठुण | दट्ठूण | ५५ | १२ |
| रण रणअ | रणरण अ | ५५ | १३ |
| रणरणयुक्तं | रणरणकयुक्तं | ५५ | २९ |
| सल्लपन् | सँल्लपन् | ५८ | २३ |
| पुच्छिस्सं दांव | पुच्छिस्संदाव | ५९ | १२ |

वेङ्कटराघवाचार्य.

ादेव विज्ञापये.
काव्यमाहितस्वस्वकविता
भाइति सुनिश्चयवानिदं
क्षुण्णमभिनवरूपकनिरूप
पि कतिचन (षण्णवतिः)
(९६) रूपकाणि करुणवीरशृङ्गारप्रायं प्राणायिषत। तदनु तदनुमोदनपराः कतिचन कृतधियः कविकनकनिकषायमाणचित्तवृत्तयः सुमनसः, श्रीभूस्थलीयश्रीमद्रश्रीसांबशिवशास्त्रिप्रभृतयः प्रकटयितुमिमानि सुमधुरमसमधुरं समधुरशिथिलं समधुरमुद्यमान्। अथ च यद्यपि द्रमिडान्ध्रलिपिषु मुद्रितचरमस्ति मम रूपकषट्कं, तथाऽपि तासां लिपीनामतुष्यद्भ्यामनया नागरलिप्यैव हृष्यद्भ्यां मम प्रियसुहृद्भ्यां भद्रश्री सांबशिव,भव्यश्री वेंकटरामार्याभ्यामिदमिदमनयोरेव स्वकीयायां मुद्राक्षरशालायां मुद्रापितमासीत् कलिविधूननन्नाम मदीयमष्टात्रिंशं नाटकम्। अत्र च नाम्नैव ज्ञायते कलिर्विधूयतेऽस्मिन्निति, यदेव निरवक्ष्यहं निर्वहणे नेतास्य प्रख्यातः परोरजाः पुण्यश्लोकः पार्थिवोनलः वस्तुचादसीयं चरितं, रसश्चविजयी करुणः परे च यथा सम्भवमूह्याः फलञ्च कलिभङ्गः स्पष्टमन्यदखिलमपि प्रबन्धतः इति दिक्।

तदधीदंप्रबन्धमंकयितुर्गच्छतःस्खलितामिव कुर्वायतुश्च लखनममादादिजनितं दोषमप्यदोषत्वेन गृह्णन्तस्सन्तस्सन्तोषमिदमकृतपुरातननूतनत्वविचारमात्मीयानिर्विशेषममत्रयन्तः श्रोत्रयोरुत नेत्रयोरभिनदेयुरपकिरेयुश्च मामनुद्रितानामपरेषामपि मदीयानां नवतेर्नाटकाना

मनतिचिरादेवैवं प्रकटनमुपपादयन्तीभिः

त्मदोषानभिमुखलेखलेखनैरित्यलमतिविस्तरेणाम्।

न्मा स्म च वो रसज्ञाऽपि काव्यलक्ष्यीकरणकम्

दिति च कृतपदप्रणतिरभ्यर्थये। अथ निमित्तम्

प्रभावोभवितव्यतायाः भागधेयं वाऽस्य कवयितुर्भ

भवानीवल्लभस्येत्यलमतिहल्लहलितेन॥।

इति सर्वं शिवम्

इति सहृदयसमुदायदास

भट्टश्री कु० रा० नारायणशार्म्म

# अनुक्रमणिका

---

### यात्रानामनि प्रथमांके

नांदीप्रस्तावने, नारदमुखश्रुतभैमीस्वयंवराजिगमिषावशात् कलेर्वैवश्यवर्णनपूर्वकं प्रवेशनिष्क्रामौ । परं विदर्भदुहितृविरहोत्कण्ठाविदूनचित्तवृत्तेर्नलस्य प्रवेशः, पूर्वरागप्रलापाः, पत्रिकागमनाद्विदर्भयात्रा, दिक्पालप्रस्तावश्च

### कन्यास्वयंवरनामनि द्वितीयांके

तिरस्करिणीतिरायितस्य नायकस्य सन्देशहरतया यातायातप्रसंगः, दमयन्त्याः स्वयंवरमण्डपप्रवेशः, पश्चनलीयं नायककण्ठे वरणमालापातनम्, देवतानामनुग्रहश्च ।

### कैतवनामनि तृतीयांके

कलिसाह्यसम्भूतविजयेन पुष्करेण सह नायकस्याक्षदेवनं, पौराणां सचिवानां च बोधनं, अन्ततः दमयन्तीनिवारितस्य वनप्रवासव्यवसायः वत्सयोर्वार्ष्णेयेन सह विदर्भपुरप्रेषणञ्च ।

### विप्रलम्भनामनि चतुर्थांके

वेदनासहेन नायकेन पत्न्याः परित्यागः, दमयन्त्याः पतिविषादः, तिलिकबलनाददर्शनञ्च ।

### करुणनामनि पञ्चमांके

कार्कोटकैलापत्रयोस्संवादः, किरातकृतदमयन्त्याक्रमणं, दमयन्तीपातिव्रत्येन शबरस्य दाहः, नायिकाया नायकान्वेषणं, निर्वेदादुद्बन्धनायोद्यमः, सार्थवाहेरासः, तत्कटकगमनं, गन्धहस्त्यागमनं, कटकात्प्रद्रवश्च

## छलनामनि षष्ठांके

बाहुकस्य स्वप्नप्रलपितं जीवलवार्ष्णेयसंवादश्च ।

## प्रतिपत्तिनामनि सप्तमांके

सुदेवेन सैरन्ध्रीरूपायानायिकाया: प्रत्यभिज्ञानम् चेदिराजाभिजनसंवादश्च

## तन्त्रनामनि अष्टमांके

पर्णादेन प्रतिसन्देशप्रापणं, सावित्रस्य ऋतुपर्णस्य भीमकपत्रिकाप्रेक्षणा स्वयंवरप्रस्थानम्, नायकसारथ्येन जवात् कुण्डिनप्रवेशः, अक्षहृदयप्रस्तावः, नायकस्य कलेराभिमुख्यं, शुभोदर्काशा च ।

## प्रकाशनामनि नवमांके

नायकस्य दमयन्त्या चोदितया केशिन्या तत्वोद्घाटनम्, नायिकाविषयोनायकस्याप्रत्ययः, वायोरशरीरिणी वाणी, अभ्युपगमश्च ।

## भद्रनामनि दशमांके

सजानेर्नायकस्य सपरिवारस्य च पुष्करेण सह पुनरक्षक्रीडायां सर्वस्वविजयः, आस्थानप्राप्तिः, ऋतुपर्णस्याश्वहृदयोपदेशः, पुष्करानुग्रहः पुत्रस्य गौतमेन यौवराज्याभिषेककरणञ्च भरतवाक्यञ्चेति सर्वं शिवम् । ॐ नमः शिवाय ।

---

# ॥ नाटकपात्राणि ॥

---

सूत्रधारः—भरताचार्यः ।

मारिषः—पारिपार्श्वकः ।

कलिः—प्रतिनायकः ।

सेनानीः—प्रधानम् ।

वार्ष्णेयः—नलस्य सारथिः ।

सान्नायिका:—शिबिकावहाः ।

वसुदेवः—भीमपुरोधाः ।

द्वापरः—प्रतिनायकानुचरः ।

पुष्करः—नलस्य वैमात्रेयः भ्राता ।

एलापत्रः—तिलिप्सरूपेण दमयन्तीकबलकृत् सर्पः ।

कार्कोटकः—दवाग्नेन रक्षितोनागः ।

सार्थवाहाः—नायिकोद्बन्धननिवारयितृकाः वणिजः ।

बाहुकः—अश्वाशिक्षकभूमिकोनायकः ।

जीवलः—ऋतुपर्णमान्दुरिकः ।

सुदेवः—विदर्भराजपूजागृहोपाध्यायः ।

सुबाहुः—चेदिराजः ।

पर्णादः—दमयन्तीसन्देशघोषकोविप्रः ।

ऋतुपर्णः—(सावित्रः) अयोध्याधिपतिः ।

बुद्धिः—ऋतुपर्णामात्यः ।

भीमः-वैदर्भः—विदर्भराजः ।

गौतमः——निषधराजपुरोधाः ।

दमयन्ती——नायिका (भीमकसुता) ।

लवंगिका——<br>केशिनी—— } नायिकायास्सख्यौ ।

सुनन्दा——चेदिराजकन्या ।

सैरन्ध्री——मालाकारवधूवेषा नायिका ।

राजमाता——चेदिराजजननी ।

---

शिवाभ

श्रीभट्टश्रीपण्डितन

# कलिविधूनने

## प्रथमांकः

नः पूर्वं विधिगौरवात् प्रचलितः श्लिष्टोर्मिकं पुष्करात्
जाटाटीर जटाटवीमनुविशन् जातोविमुक्तप्रभः।
तत्रत्याहिविषं विषह्यच परं सावित्रभूपाश्रयाद्
भूयाद्वः प्रकृतिंगतः कलिमलोच्छित्यै स गंगाझरः॥

पिच॥ अद्य प्रातर्नृपतिरधुना मार्गणः श्वस्सएन
ग्रामम्साक्षान्निधिपतिपदं भिक्षुकोऽयं परश्वः।
सोऽयं पश्चान्मघवपदवीं यातइत्यात्मभाजां
नेत्री काचिन्नियतिरिति सा नित्यमास्तां मुदे नः॥२॥

न्यन्ते।) सूत्रधारः॥—(समन्तादवलोक्य सविस्मयं।) अये! कथमेतत्।

परिणतकलमप्रकराः परिचलदतिमात्रशीतशीतभराः।
परिभावितविषमशराः परिमहि हिमवासराः कृतोद्गाराः॥३॥

श्च॥ कालावर्जितपर्णशून्यविटपिस्कंधान्तरप्रोल्लस-
श्रीडोत्पीडसनीडगानिजगरुच्छन्नार्भकाः पत्रिणः
स्फायद्दैमनहैमसंभृतपयोधाराभिषेकार्द्रिताः
शीतार्ताः करुणं रुवन्ति विपिनादारादनन्याश्रयाः॥४॥

अपिच ॥ कासारा रसमग्नकासरकुलाः क्लुष्टस्खलत्सारसाः
पौरास्शारनिशारकंबलधरा मध्यन्दिनेऽप्यासते ।
वाचा केवलमक्षताधरमसच्छैत्योपचारं रतं
द्वीपालोकशिरोगृहाचलवनीपूराश्च निर्मानुषाः ॥ १ ॥

(परिक्रामितकेन । सवितर्कम् ।) कथमीदृशेऽपि समये सम्मिलिताः पारिषदाः । (स्मृतिमभिनीय सहर्षम् ।) आः ! नन्वद्य समुपस्थितश्चराचरगुरोः मकरजगन्मंगलस्य मङ्गलाजानेः मिकनातनोः श्रीमतः कुम्भेश्वरस्य मघोत्सवः तदेवासन्नेयं । तत्प्रियसखं प्रियंवदमाहूय संगीतकमुपक्रमे ।

(परिक्रम्य नेपथ्याभिमुखमवलोकय ।) मारिष, इतस्तावत् ।

(प्रविश्य पारिपार्श्वकः ।)

**पारिपार्श्वकः ;** भाव, एषोऽस्मि । अनुगृह्यतामयमाज्ञानियोगेन ।

**सूत्रधारः ;** मारिष, ननु पश्यस्येनां अखिलकलाकलापकनकनिकषदृषदं परिषदं । आदिष्टोऽस्म्यनया यथा "भरतराज, बहुशः ... श्रितभावकप्रयोगाणामपि नाम न स्तृप्यन्ति न भवद्भिव्याहारमधुरिम्णां मनांसि । तदद्य भवता किमप्यतिबहुलरसनिष्यन्दि कन्दलदमन्दकरुणेतिवृत्तरूपकं रूपकं अतिसरलसन्दर्भगर्भमभिनीय सभाजनीया इमे सभाजना वयं.," इति । तत् कतमत् प्रकरणमाश्रित्यैनामाराधयामः

**पारिपार्श्वकः ;** तदिह भावएव प्रमाणम् ।

**सूत्रधारः ;** (स्मृतिमभिनीय ।) आः ! पार्श्वगतमपि पाथोधिरोधसि विचीयते । यदस्तिकिल निखिलमहीमण्डलमण्डनायमानकुम्भघोणनगरवास्तव्येन स्तव्येन श्रीरामसूनुना सीतांबागर्भशुक्तिमुक्ताफलेन मातुः श्री रामचन्द्रबुधेन्द्रकरुणावतारकल्याणतीर्थेन पण्डितसुदर्शनोपपदे बालभारतीविरुदभाजा भट्टश्रीपदलाञ्छनेन भावुकशिरोमणिना नारायणेन विरच्य सहादरमस्मभ्यं वितीर्णं कलिविधूननं नाम किमपि पुण्यश्लोककथानिबद्धमशेषरसशृंगाटकं नाटकम् । तेन सभासदः परितोषयिष्ये । (परिक्रम्य । ऊर्ध्वमवलोक्य ।) सखे, अविलम्बमेव नाट्यमुपक्रम्यताः । अवतीर्णः किल सर्वात्मनाऽसौ सायन्तनस्समयः ॥ तथाहि

पश्चाद्विष्णुमविमृश्य तिरस्क्रियां स्वां
रोद्धुं स एष मलिनो यततेऽन्धकारः।
श्यामामिह प्रियतमं प्रतिपालयन्तीं
भैमीं यथा कलिरसौ निषधेशरक्ताम् ॥ ६ ॥ (इति निष्क्रान्तौ

[ इति प्रस्तावना ] (शिवाभ्यासमः।)

(ततः प्रविशति चिन्तामाटयन् कलिः।)

कलिः — (स्वगतम्।) ननु नारदनिवेदितविदर्भवार्ताकर्णनात्प्रभृति परमं भैमीमभि प्रस्थितमिव मे हृदयं। तथाहीदानीं।

भीमो वीक्ष्य पतिंवरामकृततां साचातिमेधाविनी
तस्याः प्रेमच तुल्यरूपविभवे धर्मैकशीले नले।
स्रष्टैषाऽपि तथैव तस्यहिगले मालां नृपाणां पुरः
कर्षत्यत्र मनश्च कामदमुनोदग्धस्य कामे गतिः ॥ ७ ॥

(विमृश्य। सनिश्वासम् सहात्मोपालम्भम्।) अहो! किन्नु खल्वेतत्।

कालकुटिलस्य मम कालकौटिल्यं
सर्वमाकुलयत स्सकलमाकुलितं।
सङ्कृतिमुदस्यत स्सा धृतिरुदस्ता
दुर्विलसितानि ननु दुर्विलसितानां ॥ ८ ॥

च। तृष्णा पुष्णात्यहह! बहुशो दुष्प्रपूरान् प्रकारान्
लब्धे रन्ध्रे हरतिहि मनस्तस्करः पुष्करास्त्रः।
लभ्यालभ्याकलनदशया सावकाशा नचाशा
सं वृत्तं स्मरति न मनाक् भैावनं यौवनञ्च ॥ ९ ॥

मिदं सुदुष्प्रापमेवेति सुनिश्चितेऽप्यामिषे सानुरागम्मनः पुनः पुनर्मां
ते। तदेषप्रियसखं द्वापरमुपतिष्ठमानः प्रतिक्रियामस्य विधास्ये।

(इति निष्क्रान्तः) (शुद्धविष्कम्भः)

तत: प्रविशति लताकायमानस्थ: कामयमानावस्थो नायकः ।

**नायकः** — ( स्मरणमभिनीय सनिश्वासम् । )

बाला पतिंवरेयं भुवि दिव्यपि सन्ति सुन्दराः पुरुषाः ।
दुष्कृतभीरोर्मम पुनरिदमतिरभसं सुदुर्यमं चेतः ॥ १० ॥

सत्यमहममुना पूर्वरागेण महत्यां विपदि विनिहितः । तथाहीदानीं ।

जातः प्राहुणिकोत्तरारणिमुखक्षुण्णप्रियाख्यारणेः
रागाग्निः स्मरयज्वना विनिहितस्तद्वेदिकायां मयि ।
हौत्रं तत्र विधुर्दधाति मधुरप्यौद्गात्रमाध्वर्यवं
साक्षाद्यौवनमार्त्विजं मलयजावाना: पशुर्मे मनः ॥ ११ ॥

नन्वधीदमध्वरामिध्मायितं राजहंसवचसा । किन्नुखलु हंसगजवचनमपि विसंवदिता । सर्वथा सम्भाव्येव सर्वमपि दैवोपहतस्य । अथवा स्यादेतत्

उद्यत्कन्धरमूढशोणिमकलानिष्पन्दनिम्नेक्षणम्
उच्चोर्वीरुहचाटुकारमुदयन्निर्वेदशून्यान्तरम् ।
उद्वीक्ष्यात्र नलं नलोऽपि दयते तन्मां समाश्वासयन्
ऊचेऽयं सदृशन्नु किन्नु फणितिर्मिथ्या सुवश्चारिणाम् ॥ १२ ॥

तन् कोऽस्त्युपायस्तद्दर्शनायवा । नूनमयमशक्यसंघटनस्सन्दर्भः ।

( चिन्तान्नाटयति । ) ( प्रविश्य सप्रश्रयाश्रयम् )

**सेनानीः** — देव ! क्रथकैशिकेभ्य आगतेयं पत्रिका । प्रत्यक्षीक्रियताम्

( पत्रमर्पयति । )

**नायकः** — ( सहर्षतरम् गृहीत्वा वेगादुन्मोच्य वाचयति । )

" स्वस्ति श्रीराजाधिराजराजत्प्रतापविभवातिराजराजमहाराज जगदीश्वरश्रीमद्भ्यः श्रीमद्भ्यः कृतनतिसहस्रः किमपि विदर्भ विभुर्भीमो ऽभ्यर्थयते — यत्किल —

"इह कुशलमनामयञ्च चक्रवर्तिनः कपालिनश्च कृपया ।

**अथ प्रकृतं — अस्ति किल चिरानपत्यतादूनमानसस्य दिष्ट्या सनियमं सजानि समुपासीनदमनमुनेश्च मम मदुपासनाप्रसन्न**

तन्मुनिप्रसादलब्धमात्मजत्रितयं कन्यैककञ्च। तत्रच दमयन्ती समाख्यस्य सुरसुताप्रख्यस्य कन्यारत्नस्य सौभाग्यसमृद्धिः स्वयं वरेणैव पतिं वरीतुममूमिमं मामविलम्ब मन्वमीमनत्। तदनेनसभाजनीयसकलसभाजनोपचारसंभृतसमग्रसंभारेण मया स्वयंवरोऽद्य जामित्रगुणसनाथायां शुद्धतिथौ भाविनिभार्गवेदिने भावनीय इति मुनिश्चप्रचं — तदत्र सन्निहितैः सार्वभौमचरणैरनुग्राह्यः

*** स्व यं व रः *** प तिं व रा *** चेति — अथ सार्वभौमः प्रमाणं — इति सर्वं शिवम् ,, * * * * * * *

विक्रमशरत् वैशाखमाः — इति क्षितितलुठितकिरीटकोटि
वदि त्रयोदर्शा — घटितमणिघृणिनिकरनीराजितराजाधिराज
विधुवासरे — महाराजमहार्घमणिपादपमूलशिलागर्भो विदर्भ
अभिजिति — दुराधिगममहिमाधिगमनसाहसकृतदुष्कर
विलिख्य — नि का म का मि ता नु ब न्ध -
प्रेषितम्। — भीमो ........ भी मः ,,

शि वा भ्या न मः ॐ तत् सत् इति

सेनानीः — (सश्लाघम् स्वगतम्।) साधु रे भीम साधु। समीचीयं लेखसरणिः। सत्यमसि सकलविदग्भेकः। (प्रकाशम्।) देव अप्यभ्यनुज्ञायै।

नायकः — (स्वगतम् सहर्षम्।) आगत इव तामीक्षितुमवसरः। तदेष यास्यामि। अथ देवं प्रमाणम्। (प्रकाशम्।) भद्र, अपि सज्जीक्रियते गणार्थे एव वरूथिनी विदर्भगमनाय?

सेनानीः — यथाऽऽज्ञापयति देवः। (इतिनिष्क्रान्तः।)

नायकः — (उत्थाय वैक्लव्यन्नाटयन् सव्यथम्।) कथमिदंविधः स्वयंवरसमाजमण्डपमविशंकमधिगन्तास्मि। यतः।

ये मां पुरा तथास्थं धृतिमन्तं वीक्ष्य भयनतास्तस्थुः।
संप्रति तएव भूपा ईदृशमुद्वीक्ष्य वितनुयुरवज्ञाम्॥ १३॥

अथवा किमद्य स्वयंवरगमनेन सभामण्डपप्रवेशेनवा। यतः।

पृथ्वीयं परिणाहिनी त्रिभुवनप्रख्यातरूपा च सा
कामी नैति विचारणामतिवयं रूपेण भूपाश्शतम् ।
कस्मिंश्चिच्च तयावृते तदनु किं वैरार्थितैस्तेन नः
स्थेयान् भंगइहाप्यमुत्र च महान् पापानुभावः परम् ॥ १४ ॥

(लघुपरिक्रामितकेन गतिनिरोधन्निरूप्य सखेदफूत्कारम् ।)

हतहृदयं कर्षति मां अनुगुणमप्यस्य सत्वरौ चरणौ ।
अथवा कामार्तानां किम्मानः किमवमान इति ॥ १५ ॥

तदपगच्छेयमन्यथा नयेन्मामवर्णनीयां दशामनन्यजः । (स्तोकमन्तरं गत्वा । (पुरोऽवलोक्य साशंसम् ।) अये किमिह चिरायति नः सेनानीरपि ! (प्रविश्य ।

**सेनानी :** — (सप्रश्रयम् ।) देव सज्जा सहौपवाह्येन सेना ।

**नायक :** — (सहर्षम् सश्लाघम् ।) साधु भोमहामात्र साधु ममयज्ञोसि । उपवननिर्गमनमार्गमादर्शय ।

**सेनानी :** — इतइतोदेवः । (करमवलंब्य नयति ।)

(ततः प्रविशति सहरथेन सारथिः ।)

**सारथिः** — (करतलमवलोकयन् स्वगतम् ।) चिरादवमृष्टाःप्रग्रहाः । ननु नवमिव रक्तीकरोति करतलम्कशिकावलम्बनमाजानप्राजितुरपि मे ।

बाल्यएव भृतसार्वभौमताशालिनः क्षणवतश्च यौवने ।
संश्रयादिव विभोस्सदाचमूः सौकुमार्यसुषमामुदीक्षते ॥ १६ ॥

**नायकः** — (परिक्रामन्नेव स्वगतम् ।) कथं नु फलिता मे मनोरथः ।

**सेनानीः** — देव वीक्ष्यतामुपस्थितोमनोरथइव रथः । (रथं निर्दिशति ।)

**नायकः** — (निर्वर्ण्यात्मगतम् ।) उपश्रुतिरप्यनुकूलैव । निमित्तमुत्तरत्र नीलग्रीवएव साक्षात् । (प्रकाशम् । सारथिन्निर्दिश्य ) किन्नवासौ रथकुडुम्बी ।

**सेनानीः** — देव नखलु नखलु नस्सज्येष्ठा वार्ष्णेयएव ।

**नायकः** — ॐ । चिरप्रेक्षिततया दुष्प्रत्यभिज्ञस्समभूत् ।

**सारथिः** — (रथमुपनीयतत्रादवतीर्य सविनयमुपसृत्य साञ्जलिबन्धम् )। जयतु जयत्वायुष्मान् । अनुगृह्यतामयं रथस्सारथिश्च ।

**नायकः** — सूतपुत्र रथारोहणमार्गमुपदिश । (सेनानीः [illegible] ।)

सारथिः — आयुष्मन्, इतइतः। ( करमवलम्ब्य रथमारोहयति। )
नायकः — ( आरोहणनाट्यमेव परिक्रम्य। ) भद्र सहसेनया प्रस्थितस्यमम पन्थानमभिवर्तेथाः। मास्ममनागपि विलम्बिष्ठाः।
सेनानीः — यथाज्ञापयतिदेवः ( इति निष्क्रान्तः। )
नायकः — ( नाट्येनोपविश्य ) सूत चोदयाश्वान्। अतिवाह्यताम्मार्गः।
सारथिः — यथाऽऽज्ञाऽऽयुष्मतः ( अश्वांश्चोदयन् रथवेगान्निरूप्य। )
आयुष्मन्, इमे मुक्ताः। रथ्यरश्मयः पश्यत्वायुष्मान्।

सर्वोर्वीक्षणलङ्घनक्षममहाजङ्घालजङ्घाभृतः
प्रादेशान्तरवद्धिदंभगमने ह्रीणाइवामी हयाः।
आनम्राननमुच्चमाढ्विलबृहन्नासापुटं मेदिनीम्
किञ्चित्कुञ्चितचञ्चलाग्रचरणैर्यान्त्युल्लिखन्तोमुहुः॥ १७॥

नायकः — यत्सत्यमतिमनसोऽमीहयाः। तथाहि।

मम मनएव मनोरथमतिलघुगति नयति सम्प्रति विदर्भान्।
अधिकतरतरसएते प्रागेव तयोरथं नयन्तीव॥ १८॥

( पश्चादवलोक्य सविस्मयम्। ) अये! दूरे दृशामद्य निषधाः।
सारथिः — आयुष्मन् नन्वागताः स्मः कृथकैशिकान्।
नायकः — ( सविस्मयम् पुरतोविलोक्य सहर्षतर्षम्। ) अये! अमीकिल।

कासारसारसपरीमलचौरतीर-
वानीरकुञ्जगृहमूर्च्छदुदारवाताः।
अत्यन्ततान्तबिसकान्तकिसालतल्पाः
स्वान्तं हरन्ति हि नृपोपवनप्रदेशाः॥ १९॥

( सरोमाञ्चं निर्वर्ण्य स्वगतं सचिन्तम्। ) अथवा किमस्मान् प्रत्येवेदम्। सन्ति खलु भूयांसोभुवि दिविच श्रेयांसः सुकृतिनः।
( नेपथ्ये। ) सखे! समवर्तिन्! समुदीक्ष्यतां दक्षिणाहि कुण्डिनतः।

श्वेतच्छत्रचितध्वजाच्छचमरीवालहयीभास्वरं
भास्वन्तं भगवानिवाभिमुखमत्रैनं रथं संश्रितः।

क्षात्रेऽपि श्रितसौम्यशोचिषि मुखे शान्तिं समग्रां वहन्
आयात्यत्र शनैः कण्ठपरितः पश्यन् महर्षी प्रभुः ॥ २० ॥

**नायकः** — ( निशम्य । ) वार्ष्णेय ! अश्रुतचरोऽयं मन्द्रमधुरः स्वरः ।

**सारथिः** — आयुष्मन् , अमानुषएवायं तन्न ज्ञायते कस्यायमिति ।

( पुनर्नेपथ्ये ! ) — महाराज ! किमेनमपि नजानासि । एषखलु ।

सूनुर्विश्रुतवीरसेननृपतेर्विख्यातदोर्विक्रमः
सर्वद्वीपगसार्वभौमविरुदः प्रागेव बाल्यात्ययात् ।
निश्चिन्तं निषधेषु नित्यवमतिर्निर्व्याजरक्षाविधिः
शत्रूणामनलोऽपि योनलइति प्रख्यातनामा वशी ॥ २१ ॥

**नायकः** — अये ! अयमपरः कस्याप्यन्यादृशः स्वरः ।

**सारथिः** — आयुष्मन्तमेव स्तवीत्ययमपि ।

( पुनर्नेपथ्ये । ) — महाराज ! जाने खल्वेनमहमपि । अस्य किल ।

अनधीतमनूनमविदितमन्यवधूवक्रमधृतमप्ययशः ।
अस्मृतमवमाजिगीषितमवनीमुरवीर्यमानितमपि फल्गु ॥ २२ ॥

**नायकः** — सूत ! किमयंक्षणेक्षणेभिद्यते तन्मन्ये भिन्नभिन्नानामेवागम

( पुनर्नेपथ्ये । ) महाराज ! कृतकृत्याः स्मः । तथाहि ।

एतं सांप्रतमस्मदंशजनितं धर्मैकतानान्तरं
त्रैलोक्यातिशयालुरूपममलश्रद्धालुमस्मास्विह ।
दूत्यैनैव विदर्भजामभि मिथः प्रस्थापयेमहामा
वस्मास्वन्यतमं वधूश्च वृणुयाद्वीक्ष्येव दिक्पालताम् ॥ २३ ॥

**नायकः** — ( आत्मगतम् सविषादम् । ) आ ज्ञातं महाराजपदभाजनमत्र मघवा परेच कतिपये दिगधिपतयइति । अमीच भैमीस्वयंवरार्थेवागतामध्ये मार्गममुमवलोक्य दुर्भगमस्याएव दूत्यकृत्ये नियुयुक्षन्ते । तत्का गतिर्यतः

प्रागेवेदमवाप्तभीमतनयं तद्ध्रुदयं मे मनः
दिक्पालाअपि तत्परावदधते मामेव दूत्ये मिथः ।
माश्चेदेषहतोऽस्मि विष्टपविभुद्रोहापवादोदयाद्

यद्वातान् वृणुयादियं यदि हतं हा ! हन्त ! तन्मे मनः ॥ २४ ॥

किञ्च। वाचा किन्नु वशीभवन्ति सुदृशस्तत्काम्यभावादृते
स्याच्चेत्सप्रतिभूः कुतः किमयमप्येतादृशः कल्प्यते।
देवानप्ययमात्मभूर्वितनुते भ्रश्यद्विवेकानहो
यद्वा दुर्भगएषणव भविता तेऽमी स्युरुद्यत्फलाः ॥ २५ ॥

यद्वाविनङ्क्षवत्। भगवान् भवःप्रमाणम्। (प्रकाशम्।) सूत कुतोरथोमंदः।

**सारथिः** नन्वाविशामेदं कुण्डिनं। पश्यत्वायुष्मान्। इदं किल।

शुभ्राभ्राच्छोपकार्याशतनतिवितनं स्फारगौराश्वजुष्टं
हम्मोद्यत्पूर्णपात्रप्रचलितपुरुषं प्रस्फुरद्वारमुख्यम्।
अर्थ्यानर्घ्यामरस्मिच्छुरितमभिनवप्राप्तलक्ष्म्येकलक्ष्म
क्षुब्धक्षुभ्यत्सुधाब्धिप्रतिनिधि नगरं भीमरम्यान्तरालम् ॥ २६ ॥

(पुनर्नेपथ्ये।) सखायः ! प्रविश्यविदर्भपुरं परमखिलं विचारयामस्तावत्।

**नायकः** — (अनाकर्णितकेन स्वगतम्।)

अतिलंघिनाच वेला मध्येपात्रं सुदूरमुपयातम्।
अवगाह्यनेन बहुभिः कोवा मुक्ताफलश्च लब्धा नः ॥ २७ ॥

(प्रकाशम्।) सव्येष्ठः ! प्रतिनिवेदितेन प्रत्युद्गम्यमानाभीमेन प्रविशाम कुण्डिनं नगरम्। तदत्रैव क्वचन स्कन्धावारमवतारयामः। शिवायोऽस्तु नमः।

(इति पुरोपवनप्रवेशनाटयन्नेव सहसारथिना रथेन निष्क्रान्तः।)

इतिश्री भट्टश्रीपण्डितनारायणसुदर्शनीये कलिविधूनने यात्रा नाम प्रथमोंकः।

अथ द्वितीयोंकः

(ततः प्रविशति पादचारेणैव विनिश्वसन्नायकः।)

**नायकः** — [स्वगतम् सचिन्तम्।] आः किमत्रविधेयम्। यतः।

आमिषमियं हि मनसोनियतविधेयं निलिंपविभुदूत्यम्।
कथमिहच संविधानं गतमर्यादाहि कामुकी वृत्तिः ॥ १ ॥

अथवा निरुद्धचित्तवृत्त्येव किमप्यस्मि वच्मिकथमपि। तथापि नखलु सा मे गिरैव तदनुरागिणी भविता (।स्मरणमभिनीय सखेदम्।) अधिपात्रमाधायखाद्यमनुपदं काकलकग्रहणमिव पौरजनेरेणप्रहृष्टात्मनः प्रतिपाद्य मे

परिग्रहार्हतां सांप्रतमेतद्विधातुर्विधातुर्धिगातिकुटिलमाचेष्टितम् । यद्वा-नैसर्गिकीनु नियतदुःखिता कामुकानां । तत्किमत्र दुरन्तयानयाचिन्तया । तत्कथमपि समापतितोऽस्मि तत्सान्निवेशोपवनभुवम् । तद्यावदेनामुदीक्षे ( परिक्रम्य पदान्तरे स्थित्वा पुरोऽवलोक्य । ) सत्यमस्मिन्नेव सरससरस्तीरपर्यन्तवर्तिनि मञ्जुवञ्जुलिनि भविता निकुञ्जे दमयन्ती । पश्यामि यावत् । ( उपसरन्नेव तलमवलोक्य सनिश्चयम् । ) अत्रैव सा । यतः ।

अस्पृष्टपूर्वमतिमग्नपरार्धभागं
त्यक्तक्रमं विनिहितं पदमेतदत्र ।
भ्रष्टम्मृणालमिदमंशुकलेखिकाऽसा
वेपोऽपि हन्त ! पतितः किल कर्णपूरः ॥ २ ॥

[ उपसृत्य निपुणन्निर्वर्ण्य । ] अये ! दृष्टा दमयन्ती । याकिलात्र रागानलज्वालपटलमिव मूर्तिमत्किसलयास्तरणमधिशयाना शिशिरोपचारनिरताभ्यां हृदयाद्धृदयाभ्यामिव सखीभ्यां किमप्याधिकृत्य पृच्छ्यमानाऽप्यवचनैव केवलमाचेष्टते । तदहमत्रत्य वञ्जुलगुल्मान्तरितएव तावदासां विस्रम्भालापाञ्छृणोमि । ( यथोक्तं कुर्वन्नवहितस्तिष्ठति । )

( ततः प्रविशति यथानिर्दिष्टा सह सखीभ्यां दमयन्ती । )

**दमयन्ती** --- ( सखेदवैक्लव्यन्निश्वस्य । ) हद्धी ! हद्धी ! ( परिवृत्य शेते । )

**सख्यौ** --- [क] हला दमयन्ति पुच्छन्तीणं वि सहीणं ण कहेसि इमिस्से सन्दावस्स सम्भवकारणं । णवर प्पमूरसि दवदहणदाहिदाविअ लदा ।

**दमयन्ती** --- [ख] हला लवंगिए ! हला केसिणि ! संदाविणिं वि किमं बाहेध उणो । किणो तुम्हे ण मुणाध । संदावहारिणीओ खु सहीओ ।

**लवङ्गिका** --- [ग] अजाणिअवेअ अणुजोइज्जइ । ( अपवार्य स्मयते । )

---

[क] सखि दमयन्ति ! पृच्छन्त्योरपि सख्योर्न कथयसीदस्यास्य सन्तापस्य सम्भवकारणं । केवलं प्रशुष्यसि दवदहनदाहितेव लता ।

[ख] सखि लवंगिके ! सखि केशिनि ! सन्तापिनीं पुनरपि किम्मां बाधेथे । किं युवां न जानीथः ? सन्तापहारिण्यः खलु सख्यः ।

[ग] अज्ञात्वैवानुयुज्यते ।

**केशिनी** — [घ] कुदो पहुदि ईरिसी सि संवुत्ता। णं तुमं पुव्वं सव्वं वि अम्हाणं अविलंबं अणवाहित्थं समत्थेज्ज। किण्णु खु एदं एआरिहि।

**नायकः** — ( निर्वर्ण्य सविषादम्। ) हन्त ! परां कोटिमारूढेयमनंगस्य। तथाहि। फूत्कारिणी बहुलबाष्पझलज्झलाक्षी
भूयोविवर्तिततनुस्मुकशा सिताच।
सेयं कमप्यसदृशं दधती विकारं
हाहन्त ! शुष्यति च शोषयते च शय्याम् ॥ ३ ॥

**दमयन्ती** — [ङ] हला मा म्ह कुप्पध। सालीणदा खु मं तह तुण्हीएइ।

**सख्यौ** — [च] हला दमअंति ! किं अम्हासुंतो वि अवत्तवासि।

**नायकः** — ( सहर्षविषादं सहकुतुकनिर्वेदं सविस्रम्भसरम्भं सवैलक्ष्यप्रणायतम्। )
सुभग दुर्भग पास्यसि सांप्रतं
श्रवणलिप्सितमत्र सुधाविषम्।
यदियमात्मसखीवशवर्तिनी
विवृणुते विरहज्वरकारणम् ॥ ४ ॥

**दमयन्ती** — [छ] हला, मह पुढमं अंगसंदावावणोअणं कुणिज्जउ। तं इग जह। (सरोमाञ्चम्। पूर्वार्धेन पुष्पशयनादुत्थाय। सविलक्षस्मितम्। )
(ज) हला, मह किर एण्हि।
मिउलथणवहणसरिसो सिसिरो सव्वंगदिण्णरोमंचो।
नलओ त्ति जेइ जो तो रसेण हिअअज्जरं अ अहिहोज्ज ॥ ५ ॥

---

[ घ ] कुतः प्रभृति ईदृश्यसि संवृत्ता। ननु त्वंपूर्वं सर्वमप्यस्माकमविलम्बमनवाहित्थञ्च समर्थयेथाः। किन्नु खल्वेतदेतार्हि।

[ ङ ] मा स्म कुप्यतम्। शालीनता मां तथा तूष्णीकयते।

[ च ] सखि दमयन्ति ! किमावाभ्यामप्यपत्रपसे।

[ छ ] सखि ! मम प्रथममंगतापापनोदनं क्रियतां। परमस्मि वच्मि। तत्किलयथा।

[ ज ] सखि, मम किलेदानीं।
मृदुलस्तनवहनसदृशः शिशिरस्सर्वांगदत्तरोमाञ्चः।
नलद (क) इति जयति यस्सः रसेन हृदयज्वरञ्चाभिभवेत् ॥

**लवङ्गिका** — [ञ] अज्ज हला केसिणि, णं अज्ज विण्णादं से ताव कारणं। जं णं अण्णावदेसादु कहेइ इमिआ नलोत्ति। जदो आहिदसंदेसो रायहंसो किं वि सहिं बोहिदवंतो। (इत्यधोक्ते। वचनमाक्षिप्य।)

**केशिनी** — [ञ] हला लवंगिए, सच्चं तदो पहुदि जेव्व एसा एअअवत्था संवुत्ता। सिलाहणिज्जो एव्व से मणोरहो। (सस्मितं निरूपयते।)

**नायकः** — (सचाषनमस्य।) श्रुतमखिलं श्रोतव्यं मन्दभाग्येन।

कथमियमिह मम वचनादनुरज्येल्लोकपालेषु।

कामो हि दुर्निवारः मत्स्यवणस्याग्नि कृत यो मेतु॥६॥

**दमयन्ती** — (सलज्जास्मितमधोमुखी तणेन नलो निरूपयन्तीव करुणा तिष्ठति।)

**सख्यौ** — [ट] जइ सो वि अम्भवअणं विवळ्मणि अस ससरं आअमिस्सइ तदो वेअ सिद्धो से मणोरहो।

**दमयन्ती** — (तथा स्थितैव स्वगतम्।) [ठ] तह हंसराअसंदेसपेसणो सो राएसी किं तुण्हीं चिट्ठइ। (प्रकाशम्।) णं एत्थ मंदभाइणीए भग्गं एव्व प्पआणं। (दीर्घमुष्णम् निश्वसिति।)

**केशिनी** — [ड] हला सो णिसंदेसो वि विरहुम्माइओ वेअ वट्टिज्जइ।

**लवङ्गिका** — [ढ] मह वि तह एव्व पडिहाइ। तह जइ वाअंतरेण विण आवडे किं णो दाणिं दाणिं।

**दमयन्ती** — [ण] सच्चं एसो कोवि अम्मासणप्पआरो पिअसहीणं मह केरअस्स माणसस्स। अण्णह कहण्णु एदम्। (अश्रूणि किरति)

---

[ञ] अयि सखि केशिनि नन्वद्य विज्ञातमस्यास्तावत् कारणं यदेनदन्यापदेशात्कथयतीयं नल इति। यत आहृतसन्देशो राजहंसः किमपि सखीं बोधितवान्।

[ञ] सखि लवंगिके सत्यं ततःप्रभृत्येवैषैतदवस्था संवृत्ता। श्लाघनीय एवास्या मनोरथः।

[ट] यदि सोऽपीदमं वचनमपि बहुमत्य स्वयंवरमागमिष्यति तत एव सिद्धोऽस्या मनोरथः।

[ठ] तथा हंसराजसन्देशप्रेषणस्स राजर्षिः किं तूष्णीं तिष्ठति। नन्वत्र मन्दभागिन्या भाग्यमेव प्रमाणम्।

[ड] सखि, सनिवेशोऽपि विरहोन्मादित एव वर्तिता।

[ढ] ममापि तथैव प्रतिभाति। तथा यदि व्याजान्तेरणापि नन्वापतेत् नस्थानमिदानीं।

[ण] सत्यमेषकोऽप्याश्वासनप्रकारः प्रियसखीनाम्मदीयस्य मानसस्य। अथवा कथन्न्वेतत्।

नायकः — (सश्लाघम्।) सत्यमेवाहतुः सख्यौ (सनिर्वेदम्।) मन्दभाग्यः परमशरणोऽस्मि। यदापतितस्यापि पाणिग्रहणमनु परेतराजोपरोधनमित्याभाणकोमय्येव यथार्थतामयासीत्। अलमनुशोच्य दैवदुर्विलसितानि। संदेशहारिणः समयविलम्बनमप्यसाम्प्रतम्। तद्यावदुपसर्पाम्येवमेव भैमीं।

यत्रेदं सरससमीरितानि वक्तुं
श्रोतुञ्च प्रसभमधत्त कौतुकम्मे।
तत्तादृङ् मम हतमानसन्नु तूष्णीं
अन्यार्थं स्वयमनुमन्यतेऽभिधातुम्॥ ७॥

भवतु यथावत्तं प्रयतिष्ये। अथ भगवान् भूधरजावल्लभएव प्रमाणम्।
(सहर्षोपचरय कुभप्रवेशनाट्यन्नेव स्वेदवेपथू निरूप्य।) किमपि हंत! पापमाविष्करोति दग्धमन्मनः। तदेनत्प्रणिधानेन निरुध्य परमहं गन्तास्मि पतिंवरामनु। (गांतिं निरुध्य। प्रणिधानेन मनो निरोधस्त्राटितकेन परिक्रामन् दमयन्तीं विलोक्य स्वगतं)
ननु तिरस्करिणीविद्यान्तर्हितमियमपि मान्नज्ञातुमलम्। तदलमनया प्रियसखीजनानुसृताया अपि पुरतः। तत्प्रकाशमत्र परिक्रामानि।

दमयन्ती — [न] जइ सो वि आअदो तदो।

नायकः — (शनैःतिरस्करिणीं मपनयति।)

(सर्वाः — विलोक्य किञ्चिदिव संभ्रान्ताः।)

सर्वाः — (सविस्मयम्।)

[थ] एदं पादजुअं सरोरुहजुईकुट्टाअसोहावहं।

लवंगिका — (सकुतुकम्।)

[द] एदं सारदवारिवाहसअलच्छाअं दुऊलंसुअं।

दमयन्ती — (सानुरागम्।)

[ध] एदं अ प्पहमाणपथ्यिवसिरीलीलाघराहं उरं।

---

[त] यदि सोप्यागतस्ततः।
[थ] एतत् पादयुगं सरोरुहयुगीकुट्टाकशोभावहं
[द] एतच्छारदवारिवाहशकलच्छायं दुकूलांशुकम्।
[ध] एतच्च प्रथमानपार्थिवश्रीलीलागृहाममुरः

**केशिनी** ---- (सगौरवम् ।)

[न]एदं पव्वणसव्वरीससरिसं उण्णासणाहम्मुहम् ॥ ८॥

**दमयन्ती** — (स्वगतम् ।) [प] अह्मो ! रूव्वम् । अह्मो ! लावण्णम् । किं गो एमो वसन्तो । किण्णु सरूव्वो मलअसमीरो । आदु संकप्पजो संगो इमो ।

**नायकः** —[ विलोक्य । सधैर्यं । दमयन्तीमुद्दिश्य ।]

दूत्येऽस्मि दिक्पतीनामेषनृपालस्य कस्यचित्सूनुः ।
मन्त्वप्रतिसीरिकया देवि दुरीक्षान्निबोध मां प्रथमम् ॥९॥

**दमयन्ती**—[स्वगतम् ।] [फ] किणो ईरिसा वि राअकुमारा महिअलम्मि
[ प्रकाशम् ।सभ्रूलतारेचनम् ।सखीजनमीक्षते ।] [ सगौरवम् सप्रश्रयम् । ]

**सख्यौ**—[ब] महाभाअ, णं णं आसणं अणुगेण्हदु महाभाओ । कहेदु अ ।

**नायकः**— अलमवहेडनेन । कोसौ महाभागः । दूतस्यत्वाऽऽसनमयोग्यम् ।

**दमयन्ती** — [ संस्कृतमाश्रित्य सधैर्यावष्टम्भम । ]

आर्य के ते दिक्पतयः । किमधिकृत्य दूत्यमप्यार्यस्य

**नायकः** — सन्देशाहरणेनैव दूत्यम् । वच्मि के ते दिक्पतय इति ।

अस्ति प्रशस्तविभवस्सुरचक्रवर्ती
देवस्त्रिविष्टपभुजामपि देहभाजाम् ।
कर्ताऽपि यः खलु शतस्य महाध्वराणाम्
बाभायते स मघवेति महानुभावः ॥ १० ॥

किञ्च । उद्यानमस्ति किल नन्दनमद्वितीयम्
क्रीडासरिच्च सुभगा सुरनिम्नगैव ।
यानं विमानमधिरूढमनोनुयानम्
सौधोऽपि निष्प्रतिनिधिर्ननु वैजयन्तः ॥ ११ ॥

---

[न] एतत् पार्वणशर्वरीशसदृशमूर्णासनाथम्मुखम् ।

[प] अहोरूपं । अहोलावण्यम् । किमेषवसन्तः । किंनु सरूपोमलयसमीरः । अथवा संकल्पजस्सांग एषः ।

[फ] किमीदृशाअपि राजकुमारामहीतले ।

[ब] महाभाग, नन्वेनदासनमनुगृह्णातु महाभागः । कथयतु च ।

अपि च। गावः कामदुघास्तथाऽस्य नगरेह्यश्माऽपि वृक्षाअपि
त्रैलोक्यप्रथमानरूपविभवाः शालाभुजिष्याअपि।
हस्त्यश्वं तदयोनिजं प्रकटितश्वेतोहरांघ्रिक्रमम्
भुञ्जंस्तामसरावतीं पुनरिमां वाञ्छेन्नपृथ्वीञ्जनः॥१२॥

**दमयन्ती**— आर्य अलमलमतिमात्रवाग्मितया।
जानाम्येषविचारदूरचरितः श्रीमान्सहस्रेक्षणः
वृत्रघ्नंमनःपुरोरनिमिषः सर्वाप्सरस्त्रीवरः।
स्थानञ्चास्य निराश्रये नभसि तत्कृतस्त्रञ्च संकल्पजम्
स्यादन्यो यदि तत्पदे शतमखः क्वायं क्वचास्य श्रियः॥१३॥

**सख्यौ**—(सावज्ञम्।) [भ] कइ वि से दइअं वि को वि ओहारिज्ज

**सखी**:--- (सांसर्शिगःकर्मं हरन्ति।.)

**नायकः** ---- [स्वगतम्।] नूनमत्रनानुरज्यति नामे यमन्यमप्यावेदयामि। [प्रकाशम्।] देवि, आस्तामयं। अन्यं वा शृणु।
धर्मेश्वराचरचरित्रविचारयित्रीं
बिभ्रद्दूरं विजयते दिशि दक्षिणस्याम्।
प्राप्तुं सभासभिकतां धुरि यस्य सर्वे
राजर्षयस्सुचरितानि समाचरन्ति॥१४॥

**दमयन्ती** ---- [सोद्धसितं। सावज्ञम्।] विद्वन्, वक्तृरीत्यैव वाच्यानामप्युत्कर्षः। तद्यथा।
जाने तञ्च परेतराजमनिशं योनारकस्थासुम-
दीनस्वानविपश्चिकाकलरवश्रावप्रहृष्टश्रवाः।
तन्दण्डं तमुदारपाशमपितन्देहञ्च यस्यासितं
तद्यानम्महिषञ्च वीक्ष्य मनसाप्यत्र प्रजाबिभ्यति॥१५॥

**सख्यौ** ---- [सकम्पसाध्वसम्।] [म] हला दमअन्ति, दण्डहरंवावाहरइ महाभाओ।

---

[भ] करोप्यस्य दयितामपि कोप्यपहरेत्।

[म] सखि दमयन्ति, दण्डधरंवा व्याहरति महाभाग

**नायकः** ---- देवि, चेदित्थमपरमपि शृणु । तथाहि ।

जानास्यथ रसाधीशं मतिचीशं प्रचेतसम् ।
यत्प्रसादाद्भवेद्वृष्टिर्यतःकृत्स्नोर्वरा धरा ॥ १६ ॥

**दमयन्ती** — [ साशिरःकम्पम् । ] प्रायशो महतएव व्याहरति महाभागः ।
तथाहि । वेदाहमेषहि निरामयतोदयाय
भूयस्समर्चितगिरीशपदोजडात्मा ।
क्रोधास्तृतस्फटभयानकभोगिपाशान्
स्वापेऽपि हस्तगतमेव बिभर्ति योऽसौ ॥ १७ ॥

**सख्यौ** ---- [ य ] णं अप्पसारा वेअ सिविणएवि सथ्थहथ्था दीसन्ति ।

**नायकः** — देवि, नचेदनिमिषेष्वनुरज्यसि मनुष्यधर्माणमपि शृणु ।

यस्त्र्यंबकस्य मुहृदात्तनिधिप्रकाण्डः
प्रस्तारिचैत्ररथविस्तृतकुञ्जलीलः ।
यस्यास्ति मानसमितीव सरः प्रसन्नं
अच्छोदमित्यपि परं त्रिजगद्दुरापम् ॥ १८ ॥

**दमयन्ती** — [ साशिरःकम्पम् । ] साधु भो महाभाग साधु ।

वेद्मि प्रकाममयमेव पिशाचराजः
गन्धर्वपत्तननिदर्शितराजनीतिः ।
रक्षन्निधीनरिभयेन मनुष्यधर्मा
ऽप्ययस्त्वमप्रएव नरयानचरः कुबेरः ॥ १९ ॥

**सख्यौ** — [ र ] महाभाअ, ओसिदा खु दिप्पालकहा । अध को संदेसो ।

**नायकः** — ( स्वगतम् । सचिन्तम् । ] आः किमधुना मया विधेयम् ।
नन्वधिगतमस्याहृदयम् । साक्षिण्यस्सन्तु सर्वाश्च देवताः ।

वीक्षेथाः कर्मसाक्षिन्ननिल सहसुहृज्जागृहीन्दोऽवदध्या
वन्देऽहं रोदसी वां प्रणतिरियमपाश्चित्त जानासि सर्वम् ।
सन्ध्ये देव्यौ नमोवामहरपि सनिशा पश्य मां वेत्तु धर्मो

---

[य] नन्वल्पसाराएव स्वप्नेऽपि शस्त्रहस्ता दृश्यन्ते ।

[र] महाभाग, अवसिता खलुदिक्पालकथा । अथ कस्सन्देशः ।

यद्दैको लोकपालेष्वयमथ शमनोवेद निष्कल्मषम्माम् ॥ २० ॥

किञ्च। हन्तोपक्रमएव सूचितमनास्सेयं कठोरोक्तिभिः
सन्देशञ्च कथं वदान्यभिगतं ह्यद्यैव यत्तत्फलम्।
जोषञ्चेदहमाश्रयेय च दिशाधीशानतस्ते पुनः
सन्देशाकथनादहृष्टमनसो भूयो नियोक्ष्यन्ति माम् ॥ २१ ॥

[ चिन्तान्नाटयति। ]

**दमयन्ती** — [ स्वगतम्। सवितर्कम्। ] [ल] किं से विक्खणादो प्पहुदि प्पवाअसण्णिहिओ विअप्पईओ फुरफुराअइ महमणं। एसोवि हंससंसिअ सअलकल्लाणलक्खणो दीसइ। मह अ मणं अण्णदो णमणांवि लएज्ज। ता एसोएव्व सो से मे मणप्पिओ। [ सविमर्शम्। ] सच्चसंधो खु सो। तापुट्ठोवि अण्णह ण कहेज्ज। ताहोदु। पुच्छिस्सं दाव णं णं सहीमुहेण [ शयनादुत्थाय। सखीपरिसरमुपसरन्त्येव। प्रकाशम्। ] कथ्यतां सन्देशश्च।

**नायकः** — कथयामि श्रूयतां। तत्किल यथा।

दिक्पालावयमार्थिनो दिविषदामाप्तिर्न साधारणी
मधाविन्यतिमात्रमत्र विमृश स्वश्रेयसे भूयसे।
श्रुत्वा प्रेष्यमुखात्सविस्तरकथं सर्वान् गुणान्नः परान्
इच्छा यत्र तवास्ति तं वृणु चतुर्ष्वस्मासु चन्द्रानने ॥ २२ ॥

**दमयन्ती** — [ सावज्ञम्। विहसन्ती। ] [व] हला, अधसुणाध
[ नात्येनकेशिनीकर्णे किञ्चिदिव कथयित्वा। स्तोकमन्तरमपसृत्य। ]
किम्महाभागोऽप्यमीषामक्षिगततामयासीत्।

**नायकः** — [ स्वगतम्। ] न केवलम् तेष्विय मननुरक्ता किञ्च तानवहसते। हन्त धैर्यमबलानामपि। [ प्रकाशम्। ] देवि, किन्तदक्षिगोचरतया।

---

[ल] किमस्य वीक्षणात्प्रभृति प्रवातसन्निहितइव प्रदीपः फुरफुरायति मम मनः। एषोऽपि हंसशंसितसकलकल्याणलक्षणो दृश्यते। मम च मनोऽन्यतो न मनागपि लगिता। तदेष एव सोऽस्या मे मनःप्रियः। सत्यसन्धः खलु स [illegible]ोऽप्यन्यथा न कथयेत्। तद्भवतु। प्रक्ष्यामि तावदेनं ननु सखीमुखेन।

[व] सखि, अथ शृणुमः

ते खलु महात्मानो दर्शनमात्रेण दोषान्निघ्नन्ति देहिनाम् । अथ किमेभी रोमन्थमन्त्रैः । उच्यतां यदिदं प्रियन्नवेति ।

**दमयन्ती** — अथेदं कथनीयमपि। उच्यते।

**केशिनी** — [श] महाभाअ कहेदु कोणाम देसो तह देव्वचरणणह मऊहजोण्हाहिसित्तधरणिदलो। के उण देव्वेण पुत्तिणो पिअरो। काओ उण जणदाओ चंदलोअवासिसरिच्छदं उच्छेंति देव्वमुहचंदकिरणकंदलीकंदलिआणंदाओ। कुदो देव्वस्स तणू किसा सोणसोणं अविलोअणं। अणुगेण्हदु कहणेण णो सव्वस्स।

**नायकः** — (स्वगतम्। सविमर्शम्।) कथञ्चिदिमामच्चरितमेव विशदयितुं यतन्ते। किं करवाणि। यतः।

प्रत्युक्तिरद्भुतममन्थरमत्र देया
सन्देशहर्तुरुचिता न तिरस्क्रियाऽस्याः।
अर्थोहितोयदनुयोगमनुत्तराणि
यद्वा किमप्यभिगदेयमहो मृषोद्या ॥ २३ ॥

तद्वदामि यथार्थमेव भंग्यन्तरेण। [प्रकाशम्।] भद्रे, अप्रकृतं पृच्छसि। तथाऽपि दूतस्वभावेन वच्मि।

जन्मक्षोणी निषधाः जनतामम तद्वदासतेऽसंख्याः।
नरएवास्मि सुतोऽपिच राज्ञः कस्याऽपि वीरसेनस्य ॥ २४ ॥

**दमयन्ती** — (स्वगतं सहर्षम्।) [ष] अह्मो! ण्णादं से केअव्वम्। किणो एसो दङ्कदेव्वदुत्ते वट्टइ। अविणाम इमो अआमो। अविअ हंसराअस्स वअणाइं वि विमोअणकारणादु गइआइं। आदु चिरादु समाअमप्पआरं झाऊण णिव्विण्णो णु संवुत्तो। आहोस्सि मह हिअअअं परिक्खिदुं वेअ एव्वं भणइ।

---

[श] महाभाग, कथयतु को नाम देशस्तथा देवचरणनखमयूखज्योत्स्नाभिषिक्तधरणितलः। कौ पुनर्देवेन पुत्रिणौ पितरौ?। काः पुनर्जनताश्चन्द्रलोकवासिसदृशमुच्छ्रयन्ति देवमुखचन्द्रकिरणकन्दलीकन्दलितानन्दाः। कुतो देवस्य तनुः कृशा शोणशोणं विलोचनम्। अनुगृह्णातु कथनेन नस्सर्वस्य।

[ष] अहो! ज्ञातमस्य कैतवम्। किमेष दग्धदेवदूत्ये वर्तते। अपिनामायमकामः। अपिच

णं एसो सच्चसन्धो त्ति सुव्वइ। ता सव्वह सो विरत्तो वेअ। हला किण्णो णेण संल्लवणेण। णं ण्णादा से सअला वि प्पउत्ती।

नायकः— तनिमा वपुषि शोणिमा च दृश्यात्मभूशासनव्यसनजागरतः।

लवंगिका　[स] हला, जहाचिन्तिदं महाराओ णरो एव्व।

केशिनी — [सस्मितम्।] [ह] अलाहि इमिणा परुसवण्णोदिएण णं भवं णाअओ णिसहाणं आदु सव्वहोम्मो सव्वंसहाए णलो।

नायकः — [शनैः। सर्वलक्ष्यम्।] अथकिं। अथ किमनेन।

सर्वाः — [उत्थाय। सभक्तिप्रश्रयम्।] [ळ] णं महाराअ भवप्पउत्तिसवणादो भवं अरुहदि अरुहणं अम्हाणं। ता अलंकरेदु एदं पल्लवसइअं॥

[दमयन्तीमनु शय्यान्दर्शयति।]

लवंगिका — [क्ष] कुदो एव्वं वक्को मग्गो महाराआणं वि।

दमयन्ती —[सव्यन्तरिता भूत्वा। सलज्जास्मितम्। सानुरागं पश्यन्ती। सचिन्तं।] [ज्ञ] किं भणिस्सइ वा। सुणामि दाव सुहाणिव्विसेसं से वअणं।

नायकः — [स्वगतम्।] किमिदमापतितम्मे विवाहयात्रायां वीरवेतालवेशइव दूत्यकृत्ये धूर्तपरिपाटी। तथाहि।

ज्ञातोऽस्म्यहं स्थितिरपि प्रमदावने मे
दूत्यन्दिगीश्वरततेर्मयि रज्यतीयम्।
रूक्षं किमप्यभिदधाति लवंगिकासा
ऽप्येवं प्रवालशयनीमनु केशिनी च॥२९॥

---

हंसराजस्य वचनान्यपि विमोचनकारणाद्वदितानि। अथवा चिरात्समागमप्रकारं ध्यात्वा निर्विण्णोनु संवृत्तः। अहोस्विन्मम हृदयकं परीक्षितुमेवैवं भणति। नन्वेष सत्यसन्धइति श्रूयते। तत्सर्वथा सविरक्तएव। सखि किमनेन संलपनेन। ननु ज्ञातास्य सकलाऽपिप्रवृत्तिः।

[स] सखि, यथा चिन्तितम्महाराजो नरएव।

[ह] अलमनेनपरुषवर्णोदितेन ननु भवान्नायकोनिषधानामथवासार्वभौमस्सर्वंसहायानलः

[ळ] ननु महाराज भवत्प्रवृत्तिश्रवणात् भवानर्हत्यर्हणामस्माकम्। तदलंकरोत्वेतत् [तां] पल्लवशायितम् [तां]

[क्ष] कुत एवं वक्रो मार्गो महाराजानामपि।

[ज्ञ] किम्भणिष्यति वा। शृणोमि तावत्सुधानिर्विशेषमस्य वचनम्।

तत्कागतिरपसरणादन्यतः । [ प्रकाशम् । ] आसतां भवत्यएव । किन्तूतेप्य समाचारः [ दमयन्तीमुद्दिश्य । सत्वरम् । ] भवति, ब्रूतां कःप्रतिसन्देशस्सन्देशमभिप्रेषितवताम् । अनुचितमभिज्ञानामसूक्षणममृतान्धसाम् ।

**दमयन्ती** — [ सधैर्यम् । सखीमवलोकयन्त्येव । ] [ अ ] हला, भणाअ । पडिसंदेसो अ प्पणाअपुव्वो प्पच्चाएसो विअ त्ति ।

**केशिनी** — [ सस्मितम् । ] [ आ ] किणो दमअन्तीवअणं सुणिअ वेअ तुवरेइ विअ महाराओ । णं अब्भणुण्णा ण दिण्णा ।

**नायकः** — किमितोऽप्यत्रमे । [ दमयन्तीमुद्दिश्य । ]भवति, प्रणामः । साधयामि तावत् । [ प्रस्थितः । ]

**दमयन्ती** — [ सनिश्वासं । ससम्भ्रमम् । स्वगतम् । ] [ इ ] किणो ईरिसो मइ सआमो हुविज्ज । सु दुरहिअमप्पेमवड्ढणो दड्ढदप्पओ । कागई ।किं उण एदिणा जीविदेण इमास्सिं परिभूणिअ प्पेम प्पअलिदे ।

[ सास्रं सख्यावीक्षते । ]

**केशिनी** —[ सहसोत्थाय । निकुञ्जद्वारमुपारुह्य । ] [ ई ] अगहीदब्भणुण्णो महीएप्पट्ठिदो महाराओ। आपुच्छनु णं। आदु जीअं दाव जावदोसा चिट्ठ ।

**दमयन्ती** — ( स्वगतम् ) [ उ ] अविणाम णिग्गमणं विअ णाडअन्तो उणवि परिखवाक्कमेण आअभिज्जा । ( साकूतं सानुरागम् स्मितमिवमीक्षते । )

**नायकः** — [ ग्रीवां निरुध्य स्थित्वा स्वगतम् । ] भवतु तिरस्करिण्यैवानन्दये [ प्रकाशम् । ]महिले, मास्म मां रौत्सम् । श्रुते हि सन्देशे ग्राह्यमभ्यनुज्ञावचनम् । तद्यथेच्छमेपगच्छेयमेव ।

**दमयन्ती** —[ सलज्जासम्भ्रमभयकरुणमस्रपूरमवकिरन्ती सामर्षं सखीं पश्यति । ]

---

[ अ ] सख्यौ . भणत प्रतिसन्देशश्च प्रणामपूर्वः प्रत्यादेशएवेति ।

[ आ ] किन्दमयन्तीवचनं श्रुत्वैव त्वरतइव महाराजः । नन्वभ्यनुज्ञा न दत्ता ।

[ इ ]. किमीदृशोमयि सकामोभवेत् ।धिक् दुरधिगमप्रेमवर्धनोदग्धदर्पकः । कागतिः, किं पुनरेतेन जीवितेनास्मिन् परिभूय प्रेम प्रचलिते ।

[ ई ] कथमगृहीताभ्यनुज्ञस्सख्याः प्रस्थितोमहाराजः । आपृच्छस्वैनाम ।अथवा जीवन्त यावद्दोषान्तिष्ठ ।

[ उ ] अपिनाम निर्गमनमिव नाटयन् पुनरपि परीक्षाक्रमेणागन्ता ।

**कौशिनी** —- [ऊ] महाराअ, लज्जेइ खु णो प्पिअसही। ता एसेव्व भाणि स्सं दाव मे पुढमप्पणअप्पत्थणावअणम्। सुणिअ अ एदं देवो प्पमाणम्। जह।
अत्ताणं मंदेसं किसलअसइदं अ मं अ पेक्खंतो।
अत्तित्तिहरणणिउणो कुणउ उरीकरणमादु से हरणम्॥ २६॥

**नायकः** —- [ स्वगतम् ] हन्त! प्रक्रान्ताः प्रणयगिरः। तदत्र क्षणमपि न स्थातव्यम्। [ प्रकाशम् ] भद्राः, पतिंवराणां मिथोवरणमनुचितमाहुः। वित्त मामधुना वर्तमानममरसन्देशे। तदत्र भगवती भवितव्यतैव प्रमाणम्। [ स्वगतम् ] मन्त्वत्र साक्षिण्यस्सर्वादेवताः वच्मि यथावृत्तममराणाम्।

[ अन्तर्धानन्नाटयन्नेव निष्क्रान्तः। सर्वाः —- विस्मयस्तम्भन्नाटयन्ति। ]

**सख्यौ** —- (सखेदसम्भ्रमम्) [ ऋ ] अह्मो! अन्तरुहिदो वेअ सो राएसी।

**दमयन्ती** —- [स्वगतम्।] [ ॠ ] हद्धी! दुद्देव्व, किं एदं तुह इंदआलविल सिदं कहं णु पेक्खिस्सं उण वि णं। (प्रकाशम्) कागई से मन्दभग्गाए।

**सख्यौ** —- हला मा उत्तम्म। से गमणावसरव्ववहिदं अहिचिन्तयन्तीणं अह्माणं प्पडिहाइ अत्थि एत्थ कावि प्पच्चासत्ति। सो तुइ अणुरत्तो वेअ।

**दमयन्ती** —- सव्वदोमुहं खु से तं समुइअम्। किण्णेण जेव्व वो प्पच्चासा।

( नेपथ्ये। ) अये इदमिदं भर्तृदारिकोद्यानम्। तद्यावत् प्रविशामः। हे हे!

**सर्वाः** —- (निशम्य। सवितर्कम्।) काणं उण इमो सण्णाइआणं विअ सद्दो।

---

[ऊ] महाराज, लज्जते खलु नः प्रियसखी। तदेषैव भणिष्यामि तावदस्याः प्रथमप्रणयप्रार्थनावचनम्। श्रुत्वा चैतत् देवः प्रमाणम्। यथा।
आत्मानं सन्देशं किसलयशयितश्च मां च पश्यन्।
आर्तार्तिहरणनिपुणः करोतूरीकरणमथवाऽस्याहरणम्।

[ऋ] अहो, अन्तर्हितएव सराजर्षिः।

[ॠ] हाधिक् दुर्दैव, किमेतत्तवेन्द्रजालविलसितम्। कथन्नु द्रक्ष्यामि पुनरप्येनम्। का गतिरस्यामन्दभाग्यायाः।

[ऌ] सखि, मोत्ताम्य। अस्य गमनावसरव्यवहृतमभिचिन्तयन्त्योरावयोः प्रतिभात्यत्र काऽपि प्रत्यासत्तिः। सत्वय्यनुरक्तएव।

[ए] सर्वतोमुखं खल्वस्य तत्समुदितम्। किमनेनैव वो प्रत्याशा।

[ऐ] केषां पुनरयं सान्नाय्यिकानामिव शब्दः।

[ ततः प्रविशन्ति सह शिविकया सहैहेकारञ्च साम्नायिकाः पुरुषाः । ]

**पुरुषाः** — किम्महत्स्वपि कुञ्जेषु न दृश्यते भर्तृदारिका अवशिष्टानि चङ्क्रित्राणि पश्यामस्तावत् । ( विचार्य नाटयन्त एव लघुपरिक्रामन्ति ।

**लवङ्गिका** — ( कुञ्जनिर्गमनम् नाटितकेन । विलोक्य । ससाध्वसम् । )

[क] हला, सिविअं गेण्हिअ सण्णाइआ वेअ आअच्छन्ति ।

**केशिनी** — [ख] हला, किंवि संकेज्ज । ता आमु णीसरम्ह णिउञ्जघरा ।

**दमयन्ती** — ( ससम्भ्रमम् । ) [ग] हला, तह जेव्व ।

( उभे, — पाशाभ्यां पल्लवशयनं निर्लोड्य निर्गमनार्थयित्वा । पुरोऽवलोक्य । सहर्षम् ।

आमा अउप्पकलसा सिदमुत्तासरदुऊलवलहिजुआ ।

सिम्हालिअंकदण्डा मंगलसिविआ उवेइ सावरणा ॥ २७ ॥

**सर्वाः** — [घ] सच्चं एसा कल्लाणसिविआ ।

**पुरुषाः** — ( उपसृत्य । शिविकामवतार्य । सप्रश्रयम् । ) भर्तृदारिके, आदिष्टाः स्मः भर्त्रा । साम्नायिकाः, साधयत । सन्निहितदिक्पालादिमहावरः स्वयंवरः । तदचिरादानयत वरांगीं वत्सामिति । श्रुत्वाऽथ भर्तृदारिकाप्रमाणं ।

**दमयन्ती** — ( स्वगतम् । ) [ङ] तादोवि दिप्पालत्तणं दिट्ठूण भन्तोत्ति पडिहाइ । णं सअंवरंमि पइंवरा अहं विअ । ( प्रकाशम् । ) हला, साहेम्ह ; तुम्हेवि सिविअं आरोहध ।

**सख्यौ** — [च] मामा । अम्हे चरणचारेणेव्व सअंवरमंडवं आसाएम्ह ।

**दमयन्ती** — ( संस्कृतमाश्रित्य । ) साम्नायिकाः, समुपस्थाप्यतां शिविका ।

---

[क] सख्यौ शिविकां गृहीत्वा साम्नायिका एवागच्छन्ति ।

[ख] सखि, किमपि शंकेरन् । तदाशु निस्सरामो निकुञ्जगृहात् ।

[ग] सख्यौ, तथैव ।

एषा अकुप्यकलशा सितमुक्तासरदुकूलवलभियुता ।

सिह्मालिकांकदण्डा मंगलशिबिकोपैति सावरणा ॥

[घ] सत्यमेषा कल्याणशिबिका ।

[ङ] तातो ऽपि दिक्पालत्वं दृष्ट्वा भ्रान्त इति प्रतिभाति । ननु स्वयंवरे पतिंवरा इमेव ।

सख्यौ, साधयामः युवाम् शिबिकामारोहतम् ।

[च] मामा । आवां चरणचारेणैव स्वयंवरमण्डपमासादयावः ।

**पुरुषाः** — यथाज्ञापयति भर्तृदारिकायाः। (शिबिकामुपस्थापयन्ति।)

**दमयन्ती** — [छ] हला, गच्छम्हि। अध पसुवई प्पआणं।
(आरोहणं नाटयन्त्येव।) हला, गच्छध। सअंवरत्थलंमि दंसणीआ होध।

**सख्यौ** — (सस्मितम्।) अम्हे णु दंसणीआ सअंवरंमि। होदु साहेम्ह।

(निष्क्रान्ते)

**दमयन्ती**—आवर्ज्यतां जवनिका। (शिबिकां स्कन्धमारोप्य लघु परिक्रामंति)
(नेपथ्ये।) सान्नाथिकाः, ननु कन्यकागृहं प्रापय्य कात्यायनीं परिगमय्य प्रसाध्य चापरं स्वयंवरमानयत वत्साम्।

**पुरुषाः** — अहो अमात्यस्यैव स्वरः। तद्यथादिष्टमनुतिष्ठामः।
(स्तोकमन्तरं गत्वा पुरो विलोक्य साश्चर्यम्।) अये, नन्विह।

भास्वद्धेमविभूषणद्युतिलसद्बालातपप्रक्रमः
छत्रैश्चामरकूर्चकैश्च विततज्योत्स्नाप्रचारक्रमः।
रक्तस्थासकसान्ध्यरागरुचिरस्सन्दर्श्यकाञ्चित्क्षणं
धत्ते राजसमाजएष पुरतः स्वस्वासनेषु स्थितिम्॥ २८॥

(ततः प्रविशति स्वयंवरमण्डपस्थः सहदिक्पालैस्सहैव राजकेनच नायकः।)

**नायकः** —(स्वगतं।) कतिवात्र राजानः। किमियन्तोऽपिवर्तंतेऽस्मद्दृशो।

**पुरुषाः** — तद्वयमन्यतोनयाम शिबिकां। (शिबिकयासहैव निष्क्रांताः)

**नायकः** — (स्वगतम् सचिन्तम्।)

आपन्नन्नसुमक्षणे नच पुनः क्षुण्णं प्रदोहाकृतौ
नापि प्राप्तशलाटुरूपविभवे वातादिनोपद्रुतम्।
नालादप्यनिपाति बाष्पबहुलन्निष्पच्यमानांगकं
तत्ताढक्पतगायुते सति फलं लब्धाऽत्र कोवा कृती॥ २९॥

अपिच॥ सेयम्ममैवेति सुनिश्चितेऽर्थे
ऽप्याशंकते हन्त मनः प्रमादम्।

---

(छ) सख्यौ, गच्छामि। अथ पशुपतिःप्रमाणम्। सख्यौ, गच्छतम्। स्वयंवरस्थले दर्शनीये भवतम्।

(ज) आवां नु दर्शनीये स्वयंवरे। भवतु साधयावः।

प्रायेण सिद्धिक्षणएव दैवं
प्रत्यूहमुद्भावयिता जनानाम् ॥३०

किञ्च ॥ सन्देशाहरणं तथा निगदनं त्यक्तानुकम्पं पुरः
सद्यो निस्सरणञ्च भीमकसुता निध्याय निध्यायतद् ।
वैराग्येण वरीष्यते किमितरं यद्वा पराम्मान्मर्थी
आपद्येतदशामुतैहिकसुखत्यक्तादरा स्थास्यति ॥३१॥

दिगीशाः — (जनान्तिकम् ।) अथ विधेयम् । यतः ।
अनवमनपराधं सोऽयमाज्ञामधान्नः
सदृशमिद ममुष्मिन्नेव भैमी सरागा ।
इयति वरसमाजे कस्त्विषा तत्समानः
तदपि यतनभाजः स्याम दैवं प्रमाणम् ॥३२॥

अथवा ॥ दूत्यन्तस्य सुदुःश्रवञ्च वचनं दूरे दयायामनो
दुर्वारां धृतिमप्युदीक्ष्य निपुणं निध्याय याच्ञाञ्च नः ।
निर्वार्योत्कलिकांच नः प्रति सती किंवा सरागा भवेत्
अन्यक्ष्मापगवेषणाद्वरमियं दिक्पालसेवेत्यसौ ॥३३॥

किंबहुना ॥ अघटितघटनाघटितविघटनास्फुटपाटवायनिर्नियतिः ।
स्याम च यावद्वरणं प्रायोभूयः प्रयत्नवान् सफलः ॥३४॥

यद्वा । किमतिमात्रचिन्तया । कृतभूमिकतयैव कार्यमतिमन्धानमस्याः ।

यतः ॥ हृदयमिदमुपास्ते स्वामिषत्वेन यत्तां
यदियमपि नलैकायत्तचित्तेति सिद्धम् ।
नलतनुकलया तद्वञ्चयतां पुण्डरीको
ऽप्यपिहितमृगचर्मा सूपसर्पोहि मृग्याः ॥३५॥

तथाऽपि यदि नलमधिगन्ता दमयन्ती परन्तद्दौर्भाग्यन्नः ।

**नायकः** — (स्वगतं सौत्सुक्यम् ।) किञ्चिरायति मन्मानसवितर्कदोला-शृंखला बाला (नेपथ्ये — वादित्रध्वनि मंगलगीतिश्च ।)

**नायकः** — (निशम्य ।) अये, आगता नश्चित्तचकोरचन्द्रिका ।

(सर्वेतरेण पश्यन्तीव ।)

पर्यन्तप्रोतमुक्ताफलसरविसरां क्षौमिनीं क्षीरगौरां
शम्यामभ्यास्य काश्चिन्ननु शुभशिबिकामाविरस्ति प्रिया मे ।
मच्चेतश्शातनैकव्यसनिनमदयं सान्त्वयन्ती सुमेषुं
प्रयायान्तीह साक्षाद्रतिरिव करुणां बिभ्रती स्त्रीस्वभावात् ॥ ३६ ॥

( ततः प्रविशति वसुदेवावलम्ब्यमानशिबिका दमयन्ती । )

**दमयन्ती** — ( सचिन्तम् स्वगतम् । ) [झ] किं अतिक्कन्तेसु वि बहुसु राएसु ण लअइ मह मणप्पिओ । किं एसो अआमदाए वेअ णिअणअरं गदो । आदु आअदो वेअ अफ्फहआलुदाए विअ रूवन्तरिदो होदि । आहोम्मि अत्थि णु एत्थ एव्व कोडिम्मि खिदिवाललेहाए । होदु पेक्खिस्सं दाव । जइ सो सव्वहा ण दीसइ स्सअंवरमंडवम्मि अद्धा इमिआ परिव्वाइआ हुविस्सं । ( प्रकाशम् । ) अज्ज वसुदेव इदो वि केत्तिओ राआणो होंति ।

**वसुदेवः** — कियदद्य निर्वृत्तम् । इतएव किल सर्वेऽपि सारभूतास्सर्वमहाभृतः ।

**दमयन्ती** — [ञ] होदु , आसु अदिलंघेम्ह अहिला वि महीवइणो ।

**वसुदेवः** — सान्नाथिकास्त्वरितन्तावत् ।

(स्तोकमन्तरंगत्वा पदान्तरे स्थित्वा । तर्जन्या निर्दिशन् । सगौरवम् । )

वत्से, पश्य । एषखलु ।

येषामन्वयमन्वयात्सततनयः साक्षात्सजानिश्शिवो
येषामस्त्यभिधानतोऽपि मधुरेत्युक्ता पुरी पावनी ।
येष्वद्यापि निरीक्ष्यते पुरभिदो लीलाभरप्राभवं
पाण्ड्यानामयमीशिता पशुपतेः पौत्रः पवित्रः स्वयम् ॥ ३७ ॥

---

[झ] किमतिक्रांतेष्वपि बहुषु राजसु न लगति मम मनःप्रियः । किमेषोऽकामतयैव निजनगरं गतः ? अथवा , आगतएव अस्पृहयालुतयैव रूपांतरितोभवति । आहोस्विदस्त्यत्रैव कोट्यां क्षितिपाललेखायाः ? भवतु , द्रक्ष्यामितावत् । यदि स सर्वथा न दृश्यते स्वयंवरमण्टपे अद्धैषा परिव्राजिका भविष्यामि । आर्य वसुदेव , इतोऽपिकियंतो राजानो भवंति ?

[ञ] भवत्वाशु अतिलंघयावाखिलानपि महीपतीन् ।

**दमयन्ती** — ( निर्वर्ण्य स्वगतम् । ) [ ट ] एसो खु ।

सुवण्णगोरं णहबिंबलंछिअं
सुवट्टुलं हत्थतलेण गेण्हिअ ।
रोमंचिदो णं लिउअं उणो उणो
णिमीलिए ण्णस्सदि णं विलोअणे ॥ ३८ ॥

( प्रकाशम् । ) महाप्पहाओ खु सो ता मे प्पणाओ । अण्णदो दाव ।

( भ्रूसंज्ञया चोदयति । )

**वसुदेवः** — बाढं ( अन्यतो गत्वा । सबहुमानम् । ) वत्से पश्य पश्य । अयं हि ।

मरुद्वृधाऽमरावतीमिपोल्लसन्महाम्बुनं
दधाति गर्भसंज्ञिकां पुरञ्च चेरभूपतिः ।
यतोऽधिगन्तुमुत्तमां नृपालनीतिचातुरी-
मुपासते दिवौकसोऽप्युपात्तपौरकेतवाः ॥ ३९ ॥

**दमयन्ती** — ( विलोक्य स्वगतम् । ) [ ठ ] इमो हर ।

दिट्ठूण दिट्ठूण उरत्थणिक्ख-
क्खित्तं पडिच्छंदवरं महेव्व ।
णेत्तेण जेव्वत्तणकेरचित्तं
विस्साणअंतो व्व पुलोवईमो ॥ ४० ॥

---

[ ट ] एष खलु

सुवर्णगौरं नखबिंबलांछितं
सुवर्तुलं हस्ततलेन गृहीत्वा ।
रोमाञ्चित एनाल्लिकुचं पुनःपुन-
र्निमीलिते न्यस्यति ननु विलोचने ॥

महाप्रभावः खलु सः, तदस्य प्रणामः, अन्यतस्तावत्

[ ठ ] अयं किल

दृष्ट्वा दृष्ट्वोरःस्थनिष्क-
क्षिप्तं प्रतिच्छन्दवरं ममैव ।
नेत्रेणैवात्मीयचित्तं
विश्रामयन्निव पश्यत्ययम् ॥

(प्रकाशम् —प्राग्वदाख्यायति ।)

**वसुदेवः** — ( अन्यतः परिक्रम्य । निर्दिशन् । ) वत्से, । वीक्ष्यतामयमयं ।

काञ्चीति प्रथिते पुरेऽस्य वसतिः कंपामरुच्छीतले
गौरीस्तन्यपिबस्तनन्धयदशः सूनुः सुधाम्नो महान् ।
शंभोरालयमादरादहरहर्बध्वैव भुङ्क्तेपरं
राजन्वानमुनैव चोलविषयो नाम्नाप्यसौ संवरः ॥ ४१ ॥

**दमयन्ती** — ( निध्याय स्वगतम् । ) [ड] एसो खु मह दंसणा वेअ वेवइ ।

(प्रकाशम् । प्राग्वत् ।)

**वसुदेवः** — ( अपसृत्य । ) वत्से, विलोक्यतामसौ ।

यद्वंशे विधुरप्यगात्तनुजतां यत्रास्ति शीप्रा सरित्
यत्राश्रान्तमुपर्बुधः परिणतः प्राकारभित्यात्मना ।
यत्र ब्रह्मतिरस्कृतेर्भुवमितादेवाश्च भिक्षामधुः
सोऽयम्मालवराजसूनुरतुलामाप्नोविशालामिलः ॥ ४२ ॥

**दमयन्ती** — ( विलोक्य स्वगतम् । ) [ढ] इमो इर कंपि चित्तफलअं पुलोवअन्तो उणो उणो कओलत्थलगलिअकउण्हस्समसलिलपिसआइं करअलकलिदधवलदुऊलखंडेण ओमाठ्ठि । ( प्रकाशम् प्राग्वत् । )

**वसुदेवः** —( स्वगतम् । ) इयानेव मे श्रमः । यदितो नैषधस्यैव मञ्चः । ( परिक्रम्य वीक्ष्य सविस्मयम् । ) किमत्र पञ्चतयी नलानाम् ! ( विमृश्य । ) नूनमिदं किमपि वैकृतमाशापतीनाम् । तदनलमस्मि नलमधिगन्तुम् । तद्यथास्थितमस्मि वत्सायै निवेदये । अथ सा वत्सा वा, भगवती भवितव्यता वा प्रमाणम् । ( प्रकाशम् । सविस्मयस्मितम् । ) वत्से,

सर्वतःसमसौन्दर्यं समाकारं समद्युति ।
नवेद्मयमी कइत्यत्र नलानामस्ति पञ्चकम् ॥ ४३ ॥

**दमयन्ती** — ( निशाम्य सविस्मयविषादम् संस्कृतमाश्रित्य । स्वगतम् । )

---

[ड] एषखलु मम दर्शनादेव वेपते ।

[ढ] अयं किल किमपि चित्रफलकं पश्यन् पुनःपुनः कपोलस्थलगलितकदुष्णश्रमसलिलपृषतान् करतलकलितधवलदुकूलखण्डेनावमार्ष्टि ।

कर्तायं किमपीह कैतवमिति प्रागेव तत्तर्कितं
शान्तं पापमसौ नु कामविधुरां कान्तां त्यजेद्धार्मिकः ।
एतद्दग्धदिगीशदुर्विलसितं का दुर्भगायागतिः
नन्वेते प्रणिपातमात्रशिथिलक्रौर्यानमाम्यद्य तान् ॥ ४४ ॥

( प्रकाशम् । ) आर्य, वसुदेव, अवतार्यतां शिबिका ।

**वसुदेवः** — ( स्वगतम् । ) द्रक्ष्यामः किं करिष्यति वा । ( प्रकाशम् । ) सान्नायिकाः, समवतारयत शिबिकाम् । (सान्नायिकाः – यथादिष्टं कुर्वन्ति ।)

**दमयन्ती** — (अवतारमाटयित्वा शनैरुपसरति । )

**राजानः** — ( सकुतुकलज्जाविस्मयभयविषादं पश्यन्ति । )

**दिगीशाः** — ( निर्वर्ण्य स्वगतम् । ) अये इयमियमितएवागच्छति । कथमियमधिगन्ता नलमवलोकयामस्तावत् ( तद्वत्तद्दृष्ट्यएव तिष्ठन्ति । )

**नायकः** — ( स्वगतम् । सखेदम् । ) आः किमेष क्षते क्षारावसेकः ।

आसन्नेयममी पुनर्दिगधिपामद्भूमिकाशालिनो
मामप्याकलितच्छलं वरतनुर्ध्यात्वाऽपसर्ता न्वसौ ।
दोषायात्र मनाकू च सूचनममी किं स्युर्दयाशालिनः
सर्वत्र प्रणतार्तिपाटनपटुः शर्वःप्रमाणं परम् ॥ ४५ ॥

**दमयन्ती** — ( उपसृत्य प्रणम्योत्थाय । करेण वरणस्रजमादाय । सधैर्यम् । )

देवाश्चेदनघास्तथैव सदयास्तद्वन्नताभीष्टदाः
प्रेयान्मेऽप्यथ चेदनन्यहृदयस्तद्वच्च यद्यस्म्यहम् ।
जन्मेदं सफलीचिकीर्षति यदि ब्रह्माऽप्यजिह्माशयो
मालेयं निपतेद्धि नैषधगले माहेश्वरानुग्रहात् ॥ ४६ ॥

( मालां प्रक्षिपति । ) (माला च नायककण्ठे निपतति ।)

(नेपथ्ये । पुष्पवृष्टिर्मंगलगीतिर्मृदंगध्वनिश्च । )

**दिगीशाः** —( अपवार्य जनान्तिकम् । )अहो जिताःस्मःकिलमेधाविन्या । दुरभिभवा हि भगवती भवितव्यता । तत्किमितोनुशोचनया, अनया नल-भूमिकया वा । ( नाट्येन स्वरूपमास्थाय । ) ( प्रकाशम् । सश्लाघम् । ) साधु भद्रे साधु, सत्यमतिज्ञाऽसि ।

सद्दशस्तव निषधेशस्तेन हि गुरवः कृतावयं देवाः ।
धन्याऽसि सुकृतिनः स्मः शशिनो नान्यत्र कुमुदिनी रमते ॥४७॥

राजानः — अहो मेधाविता भीमसुतायाः ।

दमयन्ती — ( स्वगतम् सहर्षम् । ) [ण]

पसुवए तुह जेव्व अणुग्गहो
सदधए सफलं मह सज्जणं ।
रइवए सि किअत्थणिजुज्जमो
अहिगदो इध जं खु मणप्पिओ ॥४८॥

( प्रकाशम् समन्दाक्षाभिनयमवनिमालिखन्ती तिष्ठति । )

नायकः — ( सहर्षम् स्वगतम् । ) हन्त कृतार्थमद्य जनुः ( सविस्मयम् । )

अहो! दैवी हेला सदुपधिरहो! श्रीस्तनुभृतां
अहो! मेधा भैम्यानिरवधिरहो! भाग्यमपि मे ।
प्रिया प्राप्ता साक्षादधिधरणि दृष्टादिगाधिपाः
( सविषादम् । ) तथाऽपि स्वान्तम्मे रुजति महतामिष्टविहतिः ॥४९॥

अथवा किमत्र दैवचेष्टानुशोचनेन ।( प्रकाशम् लज्जामभिनयति । )

दिगीशाः — ( नायकमुद्दिश्य सश्लाघम् । ) भो निषधेश , ।

मा भूद्रुजा तव हृदो वयमत्र हृष्टाः
साध्नोति साध्यमखिलं भुवि सत्यमेव ।
भैमीमिमां श्रियमिवाप्य गुणानुरक्तां
दीर्घायुरत्र धरणीमव धर्मबुद्धे ॥५०॥

राजानः — ( बाहूनुद्यम्य । उच्चैः । )

विजयतां वैदर्भ्यासह विश्वम्भराचक्रचक्रवर्ती ।

नायकः — अनुगृहीतोऽस्मि महाद्भिः ।( प्रणामम्नाटयति । )

---

[ण] पशुपते तवैवानुग्रहः
शतधृते सफलं मम सर्जनम् ।
रतिपते असि कृतार्थनिजोद्यमः
अधिगतइह यत्खलु मनःप्रियः ॥

**दमयन्ती** — [त]अणुगहीदम्ह देवदाही देवेहिअ (प्रणमति।)

**दिगीशाः** — भो राजन्, अस्तु सन्तुष्टानामयन्नः प्रसादः ।

साक्षादिन्द्रः प्रवहतु हविर्यद्ददास्यध्वरे त्वं
यत्रेच्छा ते सलिलमनलश्चाग्रतः सन्निधत्ताम् ।
दूरे वाचामनिशमपि ते धार्मिकीबुद्धिरिन्धां
स्वर्णादीनामतिनिधिपति श्रीश्च दिग्धां समृद्ध्या॥ ५१ ॥

चक्रवर्तिन्, अभ्यनुज्ञायामहे । (नेपथ्ये।)

आर्यमिश्राः, अयमहमभ्यर्थये सर्वैरपि कुमारीपाणिग्रहात्परमेवगन्तव्य मिति भवदवलोकनकृतार्थो भीमः ।

**सर्वे** — बाढमास्थानीमनुप्राविशामः ।

**वसुदेवः** — सार्वभौम, भद्रमवलम्बतां करेण वत्साम्महाराजः ।

**नायकः** — (सप्रश्रयम्।) यथाऽदिशति भगवान् ।

(दमयन्तीं करमवलम्ब्य स्वगतम्।)

तीर्णो महार्णवोऽसौ
प्राप्ता मुक्तामणिर्निरायामम् ।
कृतकृत्याः स्मः संप्रति
संप्राप्ताया गरीयसी रक्षा ॥ ५२ ॥

(प्रकाशम्।) ब्रह्मन्, साधयामस्तावत् । (इति निष्क्रान्ताः सर्वे।)

इति श्रीभट्टश्रीपण्डितनारायणसुदर्शनीये कलिविधूनने
कन्यास्वयंवरो नाम द्वितीयोऽङ्कः

## अथ तृतीयोंकः

(ततः प्रविशति सहद्वापरेण सचिन्तः कलिः।)

**कलिः** — (साशंकम्।) सखे, किमिदम्। यत्किल।

भैम्यांः पाणिग्रहाय त्वरितपदमिह प्रस्थितस्याथ यन्मे
वामा दृष्टिर्भुजाऽपि स्फुरति पटुतरं गौलिरुच्चैरवीति ।
अभ्येति स्तब्धरोमा प्रकटरतिरतं लक्ष्यते ध्वांक्षयुग्मम्

[त] अनुगृहीती स्वः देवताभिर्देवैश्च।

भारद्वाजोऽप्यसव्यां गतिमिहकुरुते दक्षिणाश्चापि तार्क्ष्यः ॥ १ ॥

द्वापरः — सत्यमर्थालाभमात्मपरिभवमप्यासूचयति निमित्तजातम् । तद्दूरमितः क्षणं विलम्ब्य गमनम् ।

कलिः — सखे, न पारयामि धारयितुमात्मानं क्षणमपि । तत्किमेषकरवाणि । यतः ।

एतत्स्वयंवरदिनं बहवोनृपालाः
प्रागेव तत्र कृतसन्निधयो वसन्ति ।
सत्यं नलःप्रथममेव विदर्भगःस्यात्
तत्पूर्वमेव चलितेन मयाऽत्र भाव्यम् ॥ २ ॥

किञ्च ॥ किमितःशकुनैर्मनोहि भैमीं
अभिगन्तुं भृशमात्ततर्षहर्षम् ।
तदवाप्यजवेन राजकन्यां
कथमाप्ता नलइत्यहं विलोके ॥ ३ ॥ (सत्वरं परिक्रामतः ।)

(नेपथ्ये ।)

उद्वक्ष्ये नृपनन्दिनीमिति सखे मन्ये त्वमभ्यागतो
निर्वृत्तोहि चिरात्स्वयंवरविधिर्येम्माद्वयश्चागताः । (इत्यर्धोक्ते ।)

कलिः — (निशम्य । सरोषम् ।) केऽमी । किमुपहसन्त्युत परमार्थमेव वदन्ति ।

द्वापरः — सखे, समूहालम्बनेन न ज्ञायते केषामयं कण्ठध्वनिरिति । सविमर्शमवशिष्टमपि शृणुमस्तावत् । (सावधानं श्रवणमाट्यतः ।)

(पुनर्नेपथ्ये ।)

वव्रे साऽपि पतिंवरा निपुणधीरात्मानुरूपं नलं
यायाच्चन्द्रमसं विना तदितरज्योतींषि किं कौमुदी ॥ ४ ॥

कलिः — (निशम्य । सक्रोधम् ।) रेबालिशाः, के स्थ किम्मामुपहसथ ब्रूत भूतार्थं यदि तथा प्रवृत्तम् ।

(पुनर्नेपथ्ये ।)

धिक् मूर्ख, दुर्भग, किमात्थ दिगीश्वरान-

प्यज्ञानिमान्; कलयसे स्वसमं समस्तम् ।
भूतार्थमत्र कुधियां विवरीतुकामाः
प्रायेण भंगमुपयन्ति सुमेधसोऽपि ॥२॥

कलिः — (निशम्य सविषादम्।) हन्त! दुर्भगोऽस्मि संवृत्तः । अपि चापराद्धलोकपालोऽस्मि। सखे, का गतिः।

द्वापरः — सखे, ननु प्रणिपातप्रतीकाराहि महतामपराधाः।

कलिः — आम्। (आकाशेलक्ष्यंबध्वा। सभक्तिप्रश्रयं साञ्जलिबन्धम्।) देवताः, क्षम्यताम्। अनुगृह्यताञ्चायमनभिज्ञाय जल्पनोजडमतिः।
(पुनर्नेपथ्ये।) गच्छ रे मूढ गच्छ। अबोधमन्त्राद्गुन्मोचितोऽसि।

कलिः — अनुगृहीतोऽस्मि देवैः (कतिचित् पदानि परिक्रम्य। गतिनिरोधमाटयन्नेव।) सखे, किमिति गच्छावः। ननु संवृत्तः स्वयंवरइत्यशनिरपमदधिश्रवसम्।

द्वापरः — सखे, तन्मन्ये निवर्तनमेव श्रेयस्करमिति।

कलिः — वयस्य, किमेवमात्थ। अकृत्वाऽस्य प्रतिक्रियां न निवर्तय। पश्य। अविगणय्य सरागममुञ्जनं
यदतिसंहितवानयमंगनाम्।
तददयं नियतं निषधेश्वरं
विरहितं प्रियया करवाण्यमुम् ॥६॥

द्वापरः — किमाभ्यामपराद्धन्तव। ननु तव विधेरयमपराधः। यतः।
पतिंवरेयं सगतः स्वयंवरं
कथन्नु तौ वित्तइह त्वमीदृशः।
उपास्थिते तत्र शतेक्षितिक्षितां
सएव तस्यै समरोचत प्रियः ॥७॥
तदत्र न ते तयोरुपरोधो न्याय्यः।

कलिः — सखे, न जानासि भूतार्थम्। जाने तदेष प्रागेव सन्देशादिभिरहरदस्यामनइति।

द्वापरः — आस्तामाहितमन्तुरेव सनलः सत्याश्रवोऽसौ श्रुतः
तद्वद्याति पदात्पदञ्च न कदाप्याक्षिप्य धर्म्यात्पथः ।
तादृक्षेऽपि कथं नु जिह्ममिह ते चेतश्चिकीर्षत्यहो
किं जय्यस्तमसा रविर्ध्रुवमथ स्वस्यैव भंगः फलम् ॥८॥

कलिः —( विहस्य सामर्षम् । )कष्टमनभिज्ञोऽसिसुहृदोऽपि।यतः किल।
किं रुन्ध्यामधुनैव प्रतीक्ष्य रन्ध्रं प्रविश्य रोद्धाहे ।
लब्धे मनाक् च सुषिरे मज्जयते नावमम्भसामोघः ॥९॥
मति प्रसंगे समीहितं साध्नुमः । एहि यथाऽऽगतमेव गच्छावः ।

( इति निष्क्रान्तौ । )

( इति शुद्ध विष्कम्भः । ) शिवायोनमः ।

( ततः प्रविशति पुष्करेणसह सहाष्टापदफलको नायकः । )

नायकः — वत्स, किम्मामप्यतिशेषे । पश्येदानीम् ।
ममपाठे ! ममपाठे ! ( अक्षान् क्षिपति । )

पुष्करः — ( निर्वर्ण्य । सहर्षम् स्वगतम् । )
सति मम कलौ सहाये कथमिव न स्यादसौ पराभूतः ।
तिसृभिर्दिवाभिरेनं हृतराज्यचमूपुरं करवै ॥१०॥
( प्रकाशम् । )सखे, कीदृगत्र पणबन्धः परमक्षैर्दीव्यामः।( देवकानाक्षिपति। )

नायकः — किमिदं पृच्छ्यते । नन्वहमेव प्रागुदाहार्षम् । यथा ।
देव्यादिवाश्च तिस्त्रः श्रीपृतनाभूमयश्च सन्तु पणाः ।
उभयोरपि सदृशान्तन्मुहुरिह मम मा स्म समिदिधः कुतुकम् ॥११॥

पुष्करः —( सहर्षम् स्वगतम् । ) हन्त ! सत्यवचाःकलिः यन्मम च्छन्द प्रतिच्छन्दोऽस्यच्छन्दः ( प्रकाशम् । ) बाढं । दीव्यावः । ननु भवान् सत्यप्रतिश्रवाइतीदं देवनम् ।

नायकः —( सहर्षोल्लासम् । ) पश्य क्षणादेव निर्जितम् ।

( उभौ – मुहूर्तम् देवनमाटयतः । )

नायकः — ( आत्मगतम् सविस्मयम् । ) अहो !
क्षिप्तः क्वचिदयमक्षः पतति क्वचिदप्यहो ! किमेवमिदम् ।

पिशुनयति पराभवमिदमथ का वा न्वखिलभूतनाथेच्छा ॥ १२ ॥

(प्रकाशम् ।) पुरस्त्यविजयः किल प्रथमपराजयः पाशकेषु ।

**पुष्करः** — दीव्यताम् । अतिवाह्यताञ्च देव, देवनत्रयी । यदि जयति भवान् दास्यमभ्युपैम्येषः ।

**नायकः** — अस्तु ते दास्याभ्युपगमो नाम ग्लहः ।

(प्रविश्य ससंभ्रमम् ।)

**पौराः** — (उपसृत्य प्रणम्य ।) महाराज, किमिदम् ।

कूटः कूटक्रियाणां कुलगृहमतुलं क्रोधकुत्सोदितानां
कोशः क्रूराग्रराशेरपसृतिसरणिस्संपदो मूर्तिरार्तेः ।
कीर्तेः सद्यःप्रमादप्रणयनपदवी बीजमाचारग्लुभ्नेः
द्यूतं व्रात्यैकगम्यं तदिह कथमहो! कर्तुमद्योद्यतोऽसि ॥ १३ ॥

किञ्च ॥ यस्ते पादपपार्श्वगामितमणिच्छाये सहस्वस्तिकं
तिष्ठंस्तत्र भवत्कटाक्षसरणेः पात्रं स्वमैच्छत्पुरा ।
तावान्त्सांप्रतमक्षधूर्तपदवीं याति त्वयि स्वेच्छया
विस्रब्धं सममेव दीव्यति पुरस्तद्धिक्चतोलाघवम् ॥ १४ ॥

अपिच ॥ येषान्त्वं दुरितन्निजेन वचसा व्याहृत्य वार्तं व्यधाः
तैरेवाद्य दुरोदरं प्रति च मेत्यस्माभिरुद्बोध्यसे ।
याभूत्त्वय्यनुरागिणी नरपते, बाल्यात्प्रभृत्यद्य तां
लक्ष्मीं च प्रकृतिं पणायितुमनाश्शारैरहो! दीव्यसि ॥ १५ ॥

किं बहुना ॥ मा मा दुरोदरविधिस्सकलार्तिबीजं
हंहो! प्रसीद शृणु भूप! हितां गिरन्नः ।
धर्मज्ञ, सर्वसख, मा स्म चरः प्रतीपं
मा भूत्तवापि जनगर्ह्यपथावतारः ॥ १६ ॥

**नायकः** — (सावज्ञम् ।) पौराः, सर्वमहञ्जाने । गम्यताम् ।

**पौराः** — (सास्रम् सकरुणम् सप्रश्रयम् साञ्जलि ।) राजन्, मामैवम् ।

राजाऽसि पौरजनरञ्जनलब्धवर्णः

तन्निर्विशंकमिह किञ्चिदुदाहराम ।
सावज्ञमद्य विधुनोषि हितैषिणस्त्वं
का ते भवेद्गतिरितीव पुरा न विद्मः ॥ १७॥

किञ्च ॥ वाग्मी वाचंयमत्वं वदपदमपटुर्वित्तवान् रिक्तभावं
वित्तेशत्वञ्च रिक्तः कुमतिरखलतां सन्मतिर्दुर्मतित्वम् ।
पुण्यः पापप्रतिष्ठामवक्रदनवताम्मन्दतां विन्दुरज्ञो
विज्ञत्वञ्चापिनोयैभवति भुवि विधेर्विभ्रमांस्तांस्तुमोऽमी ॥ १८॥

किम्बहुना ॥ दुर्दैवतिमिरनिरथितदर्शनसाराः पथः प्रमादभृतः ।
अनिविषममरणिसरणात्पतन्ति पंके परं विषीदन्ति ॥ १९॥

तदद्य यथाऽभिरुचितम्महाराजाय । निमित्तमुत्तरत्र निखिलजगन्निमित्तं नीलकण्ठार्वमेव महः । तदिमे भावयामः (इति निष्क्रान्ताः ।)

**नायकः** — (विलोक्य ।) हन्त ! विद्रुताः पिशाचाः । यदमीषामारटितै राकुलितावधानः पराजितोऽस्मि ।

(प्रविश्य ससम्भ्रमम् सचिवाः ।)

**सचिवाः** — (सविस्मयम् स्वगतम् ।) आः किमियानपि कालःपरिवर्तते । यतः ।

किमिदं दुरोदरत्वं धर्मात्माऽयं नलोऽपि निर्विशति ।
अथवा प्रकृतिः पुंसां क्षणभिदुरैवात्र दैवदुर्ललितैः ॥ २०॥

[त]दुपसृत्य वयमपि मामेति बोधयेम । परमिह भाग्यन्नः प्रमाणम् ।

(उपसृत्य प्रकाशम् ।)

[र]ाजन् , । स्वधर्मशीलः प्रकृतिप्रियंकरः
शुभाशुभज्ञस्त्वमिदं किमीहसे ।
अनुक्तपूर्वस्सचिवैः किमुच्यसे
त्वदत्र कोवेद परोहिताहितम् ॥ २१॥

[कि]ञ्च ॥ उचितमथान्वयस्य सदृशञ्च महीशधुरां
अनुगुणमप्यसावभिजनस्य समञ्च तव ।
इदमनुरूपमेव नु नयस्य च शस्यमते

विमृशतरां दुरोदरदरीं बत! मास्म विशः ॥ २२ ॥

अपिच ॥ माध्यापिपः प्रकृतिमेवमत्रं विवेकिन
शीलं प्रजासु नृपतेः प्रतिबिम्बितं हि ।
पश्योपरागिणि रवौ घृणयोऽपि जाले-
ष्वत्रामममग्रवलयाः प्रतिभान्ति भूमौ ॥ २३ ॥

एतच्च ॥ भूजानेरनयान् पदेष्वनियमस्तस्मान्नृणां स्वैरिता
तस्याः पापकथा ततस्त्रिदशवैमुख्यं ततश्चेतरः ।
ताभ्योऽवग्रहसम्भवः परमतः पृथ्वीक्षयस्तन्नृपः
पश्चादिध्मविलोपनादिव शिखी नूनं स्वयन्नश्यति ॥ २४ ॥

इतरच्च ॥ द्यूतन्नाम किमप्यमोघमदिरापानं विदुः पण्डिताः
प्रस्वं वा भगिनीमुत प्रणयिनीं धूर्ताः पणं कुर्वते ।
अस्मिंश्चौर्यविधौ च पण्यवनितासंगे च बद्धादरान्
ब्रह्माऽपि ह्यनलं निरोद्धुमनघास्तन्नैतदातन्वते ॥ २५ ॥

अन्यच्च ॥ आदौ कीर्तिहतिस्ततश्च कितवैः साम्यन्ततोलाघवं
तस्मादात्मविमाननाऽथ कलहः पश्चात्प्रहाराभटी ।
तद्धेतोर्व्यवहारगेहसरणं तत्राथ शिक्षाभयोः
इत्यास्थानसभापतेस्तव विभो, वाच्या नु धौर्ती गतिः ॥ २६ ॥

अपरञ्च ॥ उद्दामग्लहकूटकर्मणि बुधोऽप्यत्रातिसंधीयते
मुग्धान् कर्तुमलं भवंति कितवाः शारेषु देवानपि ।
तैरेवं विजिते गते च विभवे राजाऽप्यहो प्राकृतः
संवृत्तोभविता हि तस्य च ततः सेत्स्यंति तास्ताव्यथाः ॥ २७ ॥

किंबहुना ॥राजन्नद्य वचांसि नः शृणु वयं कालादमात्याबहोः
पौराणां प्रमदं विधेहि कुरु ते बुद्धिञ्च धर्म्ये पथि ।
मुञ्चैतच्च दुरोदरं दुरुदरं दूरे पुनः पुष्करं
कुर्याः कर्मणि गर्हिते क्षणमपि प्रीतिं प्रभो मा कृथाः ॥२८ ॥

नायकः—(सक्रोधम्)

लीलया क्षणामेवाक्षदेविनं किन्नु बोधयथ मां मुहुर्मुहुः ।
मन्त्रतन्त्रचणताऽभिमानिनः किन्नु मे सहभुवः पराभवात् ॥ २९ ॥

**सचिवाः**—राजन् , न श्रृणोषि वचनं नः

नाकर्णयन्त्सचिववाचमुदारदर्पो
यः पार्थिवः प्रयतते दुरितं विधातुम् ।
आपद्यते प्लवइवाब्धिमकर्णधारो
भ्रंशं गत क्वचिदहो विपद दुरंताम् ॥ ३० ॥

गच्छाम अथ भगवान् भवः प्रमाणम् । (निष्क्रान्ताः)

**नायकः** —किमपि कोविदजल्पं प्रजल्प्य कुतोऽपि विलीना विशारदम्मन्यावैधेयाः ।

**पुष्करः** —अप्यत्रदयासि? अधुनाऽपि ममैव जयः, दीयतां पणः ।

**नायकः** दत्ता हि एतेन, किं पुनःपुनरनुयोज्यम् । (क्रीडति ।)

**पुष्करः** (स्वगतम् ।) साधु कृते साधु ! (प्रकाशम् ।) नन्वितोभूरेव ग्लहः?

**नायकः** —कस्संशयः, यदि तवैवाधुनाऽपि विजयः सद्यएव दास्यामि जयिनामपि भुवम् । मम पाठे ! मम पाठे !! (देवकैदीव्यति ।)

(ततः प्रविशति सभ्रमेण सबाष्पा दमयन्ती ।)

**दमयन्ती** --- [अ] अज्जउत्त, किणो पेअसिं वि से दाउं व्ववसिदो सि, अविणाम णट्ठा अण्णा सअला विहूदी, अज्जउत्त किं एत्तिओ विवेइणो वि तुह मइब्भंसो, धम्मिअस्स वि अधम्माचिंदा सञ्जादा, किं ण जाणासि जूदं णाम णिहिलविहवाविसज्जणुव्वअरणं त्ति, ता किं एदं अट्ठावदं, को एसो सारिविण्णासो, के उण एदे पणा, णं केअव्वरुव्वदाए जेव्व केअव्वणामअं एदं णं विमंससि, जं एक्कदो विणिहिदा पासआ अण्णदो वैअ परिपडंति, देवआ णाम दलिद्दलच्छीकरग्गहणकलं-

---

[अ] आर्यपुत्र, किं प्रेयसीमप्यस्मै दातुं व्यवसितोऽसि अपिनाम नष्टाऽन्यां सकला विभूतिः । आर्यपुत्र, किमियान् विवेकिनोऽपि तव मतिभ्रंशः धार्मिकस्याप्यधर्मचिन्ता सञ्जाता ? किं न जानासि द्यूतंनाम निखिलविभवविसर्जनोपकरणमिति तत्किमेतदष्टापदं, क एष शारिविन्यासः के पुनरेते पणाः, ननु कैतवरूपतयैव कैतवनामकमेतत्, ननु विमृशसि यदेकतोनिहिताः पाशका अन्यतएव परिपतन्ति, देवता नाम दरिद्रलक्ष्मी

बआ वेअ, किं एत्थ प्पउत्तो अज्जउत्तो गारवं विहवं णअरं सम्मज्जं वि सअलं ओलेवितवंतो इदो पेअसिं पि दाउं पुलोवेदि, होदु एत्तिअं एव्व, मा मा इदो वि। ( हस्ताग्रमारुणद्धि । )

**नायकः** — ( सक्रोधं करमवधुन्वन् । ) आश्रण्डि ! निरुणत्सि देवनं करेण ! जोषिमेधितावत्, अथ पश्यासि क्षणादेव समधिगतसकलविभवभरं यथायथमेव माम् ।

**पुष्करः** — नल, किमितोऽपि देवनेन, ननु पराजितोऽस्यधुनाऽपि, दीयतामाश्रुतः कल्यवर्तः ।

**नायकः** — यथाश्रुतमर्पितमखिलमपि । तथाऽपि पुनः किंचिदिव दीव्यावइत्याशा ।

**पुष्करः** — कस्तावदत्र विधूतान्यकृत्यस्त्वया सह महत्कल्यवर्तम् दैर्देविता । अथवा ब्रूहि कस्तत्र पणबन्धः ।

**दमयन्ती** — ( निशम्य सास्रम् । ) [ आ ] अज्जउत्त णं पेक्खसि तुहदसं जं एसो ओगणेइ जो तुह सेवावसरं पडिक्खंतो अट्ठाणविडादि उक्कंठसंठाणदूनविसंठुलचरणजुअलविणिमअसमअसंकंदप्पडिहारप्पंदभित्ती ओअणिअ गच्छन्तेसु किंकरेसु सम्भसूअं विक्खणं विक्खिवन्तो दोव्वारिआ अ उणउणवि पुच्छन्तो अ आसी । मुणसु एसो खुगह प्पहाओ ता एद्दु इदो वा अज्जउत्तो दव्वइणो मुदा अ वेअ ओ मिठम्ह । ( करेन्हदमवलम्ब्याकर्षति । )

**नायकः** — ( अश्रद्धितकेन । स्वगतम् सविमर्शम् । ) अये किमस्त्यदत्तं यदधुना ग्लहोचितम् । ननु स्वः स्त्रीपुंसौ सुतौ च । तत् प्रक्ष्याम्येनाम् । ( प्रकाशम् । ) प्रिये, आस्तामिदमावर्जनात्परमखिलविभवस्य विहरण

---

करग्रहणकलम्बकाएव किमत्र प्रवृत्तआर्यपुत्रोगौरवं विभवं नगर साम्राज्यमपि सकल मवलोपितवानितः प्रेयसीमपि दातुं पश्यति ? भवत्वियदेव, मा मेतोऽपि ।

आ] आर्यपुत्र , ननु पश्यसि तव दशां यदेषोऽवगणयति यस्तव सेवावसरं प्रतीक्षमाणः आस्थानवितर्दिकोपकण्ठसंस्थान दूनविसंस्थुलचरणयुगल विनिमयसमयसंक्रान्तप्रतीहारप्रांत भित्तिरवमणय्य गच्छत्सु किंकरेषु साभ्यसूयं वीक्षणमितस्ततो विक्षिपन् दौवारिकान् पुनः पुनरपि पृच्छंश्चासीत् । जानीह्येषखलु ग्ल[ ग्र ] हप्रभावस्तदेहीतोवार्यपुत्र द्रवीणावपि चावशिष्टास्मः ।

विधिनिषेधेन ननु कथमपि पुनराहरणसरणिरन्वेषणीया तत्किमद्य त्वं मे ग्लहीभवसि । क्षणादेष जितान् प्रत्याहरामि ।

**दमयन्ती** — ( सास्रम् स्वगतम् । ) [ इ ] किं अज्जवि अहज्जदुव्ववसिदो अज्जउत्तो, का गई, मामेत्ति भत्तुणो आसअप्पडिऊलदा, होदुत्ति अत्तहणणुव्वाओ, अहं वि बोहेमिणं, ( प्रकाशम् । ) अज्जउत्त अलाहि एदिणा जूदेण, प्पसीद पादेसुं प्पणिवडम्हि, किं मं पि पणं कदुअ अज्ज लहेज्ज अज्जो. एहि अंगएही वा ओसरम्ह ।

( इतंबद्धोत्थापयति । )

**नायक:** — ( स्वगतम् । ) कथमीदृशी ग्लहतामभ्युपगन्ता, नूनमियमात्मजावप्येवमेव कारयिता, प्रतीपदर्शिन्य: खलु प्रमदा:, आस्तां किमनेन । ( प्रकाशम् । ) पुष्कर, स्यामहमेव ग्लह: दीव्यतां ।

( नेपथ्ये । सक्रोधं, सोपालंभम् । उच्चै: । )

रेधूर्त ! पुष्कर, समस्तमपाहरस्त्वम्
तत्राप्यहो ? वशयितुं यतसे पणत्वे ।
साक्षात् प्रभोर्न हि सहेमहि दुर्दशां ताम्
तेऽमी निबोध पिनषाम हि पुष्पपेषम् ॥ २१ ॥

**पुष्कर:** — ( निशम्य सभयं स्वगतम् । ) अहो ! रूक्षवचस: पौरा: । मन्ये जितानामपि वशीकृतिर्विषयवासिनामतिश्रमायैव, तदेनमेतावतैव विसृजामि तावत् । ( उत्थाय प्रकाशम् । ) अनुचितमसुमत् पणविधानमस्मादृशामवनीभृताम् । तद्गच्छ यथेच्छन्तावत् ।

**नायक:** — ( सहसोत्थाय वस्त्रमाकर्षन् । ) आ: पुष्कर किमपसरसि, स्थीयतामितोऽपि क्षणमिव दीव्यतामनुमन्यताञ्चायमस्य ग्लहत्वे ।

( चिबुकमवमृशति )

**दमयन्ती** — ( सास्रम् सकरुणम् । ) [ ई ] अज्जवुत्त किणो सि

---

[ इ ] किमद्याप्यहार्यदुर्व्यवसित आर्यपुत्र: ? कागति:, मामेति भर्तुराशयप्रतिकूलता भवत्वित्यात्महननोपाय:, कथमपि बोधयाम्येनं । आर्यपुत्र, अलमेतेन द्यूतेन प्रसीद पादयो: प्रणिपतामि । किम्मामपि पणंकृत्वाऽद्य लभेतार्य: । एह्यंगकैर्वाऽपसराव: ।

[ ई ] आर्यपुत्र, किमस्युन्मत्त:, अथवा किमेतन्मन्दभाग्याया महापापपरिपाक-

उम्मत्तो आदु किं एदं मन्दभग्गाए महापावपरिवाओ एव्व एव्वं ।किं अहिलेसुं वि विहवेसुं ओहारिदेसुं अत्ताणं पि अप्पेदुं आरहासि । मा मा इमो महाप्पमाओ ॥ (दोर्भ्यां दृढं बध्वा निवर्तयति ।)

**नायकः** — (सक्रोधम्) साहसिनि, किम्मामधिपैँास्त्वमवरुणात्सि । दूरे तावत् । (पदा सन्ताड्य । सहसोपसृत्य ।) पुष्कर पुष्कर, प्रसीद दीव्य पुनरेकवारं वा, अपि वा प्रणिपतामि पादयोः । (प्रणिपातन्नाटयति ।)

**दमयन्ती** — (मूर्च्छति ।)

**पुष्करः** — (स्वगतम् ।) आः किमत्र करवाणि (क्षणं विमृश्य सनिश्चयम् ।)

अक्षैरदीव्यमदयं कलिवचनादपिच पूर्णकामोऽस्मि ।
कृतमनयोर्धुरिवृत्या प्रयामि यातामिमौ कथंवाऽपि ॥ ३२ ॥

[प्रकाशम् । सरोषम् ।] अये मा स्म मा रौत्सीः अथ पश्यसि नभोनाभिगतं नभोमाणिं ? तदतिवर्तते हि माध्यन्दिनी सन्ध्या ।

(अवधूय सहत्वरं निष्क्रान्तः ।)

**नायकः** — पुष्कर पुष्कर, क्व यासि एह्येहि पुनरपि दीव्यावः ।

(त्वरितपदमनुधावति ।)

**दमयन्ती** — (संज्ञां लब्ध्वा ।) [उ] अज्जउत्त णं तुह पदाघादो सुदुरवावो पाउडाणं अम्हारिसाणं । पसीदउ इदो वा अज्जउत्तो, अंसुआवसेसेसुं पि अम्हेसुं का उण इमिआ जूअवञ्छा । एदु भवं कुह वि विविणम्मिवेअ णिवसम्ह । (पुनर्दोर्भ्याम् निवारयति ।)

**नायकः** — (स्थित्वा सविमर्शम् स्वगतम् ।) किम्मान्दमयन्ती निवर्तयति । कथमियमसखीजनमास्थानमागता । (प्रकाशम् ।) प्रिये, कथमिहासि, कुतोवा मान्निवारयसि, कस्मादरण्यवासप्रसंगः । कथ्यताम् ।

**दमयन्ती** — (सविस्मयविषादं सास्रं सकरुणं नायकमुखमवलोकयन्त्येव ।)

---

एवैवम् । किमखिलेष्वपि विभवेष्वपहारितेष्वात्मानमप्यर्पयितुमारभसे । मा माऽयम्महाप्रमादः ।

[उ] आर्यपुत्र, ननु तव पदाघातः सुदुरवापः प्राकृतानामस्मादृशाम् । प्रसीदत्वितो वा आर्यपुत्रः । अंशुकावशेषयोरप्यावयोः का पुनरियं द्यूतवाञ्छा एतु भवान् क्वापि विपिनमेव निवसावः ।

[ऊ] अज्जउत्त, किणो एव्वं अणुजोइज्जइ । एत्तिअं कालं कहिं ठ्ठिदोसि । णं सअला वि विहूदी सारिफलदेवणेहिं ओहारिदा । ता सुदा अहं अज्जउत्तो अ सेसा । ताणं वि अप्पणं कादुं प्पउत्ते अज्जउत्ते अत्थाणं असहीजणं अ अहिगमिअ अंघिताडणं अ अणुहविअ अतिमेत्तरोसपरुसाइं पि भासिदाइं आअण्णिअ अमुहुत्तादु आरहिअ एव्वं एव्व णिवारयंती णिवडन्ती मुच्छन्ती पच्चागच्छन्ती उणवि बाहूहिं बंधिअ णिवट्टअन्ती अ म्हि । किं सअलं वि एसो तुह सिविणओ आदु चित्तविब्भमभवो । णं अम्हे सरीरसेसा म्ह । (रोदिति।)

**नायकः** — (निशम्य सविस्मयविषादम्। स्वगतम्।) किमविदितमियदद्य निर्वृत्तं ; किमियान् ममाऽपि मतिभ्रंशः । अथवेयमिच्छा भवितव्यतायाः! (प्रकाशम्।) प्रिये, अपिनगरमप्यर्पितम् ।

**दमयन्ती** — (सास्रम्।) [ऋ] अज्जउत्त, आक्कंदंतेसुं पि पोरवारेसुं अवबोहअंतेसुं पि अमच्चेसुं आरुंधन्तीए वि मइ णिहिलावि मही दिण्णा णं अत्तमेत्तसेसा अम्हे त्ति कहेम्हि । (दीर्घमुष्णमुच्छ्वसिति।)

**नायकः** — अलमलमधिगतमखिलमपि । किमनुशोचनया कृतान्तकौटिल्यस्य । अथ कागतिः । (क्षणं विचिन्त्य सनिश्चयम्।) अलमाकुलतया सांप्रतम् । यतः ।

स्वप्नेऽपि मम हि वाचा दत्तं दत्तं हि नान्यथा भावि ।
तेनेह मे पराध्यो गतिर्यथाऽऽह प्रिया वनेवासः ॥३३॥

प्रिये, तदेष गच्छामि वनं कुतस्तवापि खेदः ? याहि पितुरन्तिकमात्मजा-

---

[ऊ] आर्यपुत्र, किमेवमनुयुज्यते एतावन्तं कालं क्व स्थितोऽसि, ननु सकलाऽपि विभूतिः शारिफलदेवनैरपहारिता । तत्सुतावहमार्यपुत्रश्च शेषाः । तेषामप्यर्पणं कर्तुम् प्रवृत्ते आर्यपुत्रे आस्थानमसखीजनमधिगम्य अंघ्रिताडनमप्यनुभूय, अतिमात्ररोषपरुषाण्यपि भाषितान्याकर्ण्यच मुहूर्तादारभ्य एवमेव निवारयन्ती निपतन्ती मूर्च्छन्ती प्रत्यागच्छन्ती पुनरपि बाहुभिर्बध्वा निवर्तयन्ती चास्मि । किं सकलमप्येषतव स्वप्नोऽथवा चित्तविभ्रमभवः , ननु वयं शरीरशेषास्मः ।

[ऋ] आर्यपुत्र , आक्रन्दत्स्वपि पौरवारेषु अवबोधयत्स्वप्यमात्येषु आरुन्धत्यामपि मयि निखिलाऽपि मही दत्ता नन्वात्ममात्रशेषावावामिति कथयामि ।

भ्यां सहैव ।

**दमयन्ती** — ( सबाष्पम् । ) [ ल ] अज्जउत्त , किं आमअत्ताए सिरम्मि असणी परिवाडिज्जइ अज्जउत्तेण ण पदादो पदंवि अहं परिक्कामेज्ज । ण चजेज्ज अ खणंवि अज्जउत्तचरणपरिचरणक्खणं वणम्मि आदु भवणम्मि किण्णु मे प्पाणणाहं परिच्चजिअ भादुणो आदु पिदुणो सदणे णं सव्वावि बंधुदा सद्धीणं स्सवई एव्व । ( इदं परिष्वजते । )

**नायकः** — ( सखेदं स्वगतम् । ) किमेषाऽपि मामनुसरति ।

सकलमपि विभवजातं हित्वा विपिनं व्रजाम्यनन्यगतिः ।
सहि मम विधिपरिपाकः कस्मादेषाऽपि काननं नेया ॥ ३४ ॥

( प्रकाशम् । ) प्रिये श्रूयतामियमस्य समभ्यर्थना , याकिल ।

पदाभ्रंशो वने स्थानमिति दुःखं द्विधाऽस्तु मे ।
तृतीयञ्च वधूक्लेशदर्शनाद्देवि मास्म भूत ॥ ३५ ॥

अपिच ॥ पट्टोपबर्हसुभगहुकबद्धबर्हा-
मध्यासितुं सततमर्हसि तूलिकां त्वं ।
ग्राहांगकर्कशकठोरशिलातलेषु
गण्डोपलोपाहितमूर्ध कथं शयीथाः ॥ ३६ ॥

किञ्च ॥ तौर्यत्रिके निपुणवेणुमृदंगवीणा-
द्यातोद्यहारिणि नयस्यहरत्र तां त्वां ।
किं वा शरारुविसरारवघोरघोरं
नृत्यत्सरीसृपफणं वनमेषनेष्ये ॥ ३७ ॥

एतच्च ॥ अनायुधस्यास्य ममैव तत्र
श्रमाय जायेत हि जीवयात्रा ।
कथन्नु भर्तास्मि सहास्त्रियञ्च
क्षितिञ्च सिञ्चेत् सजलोहि मेघः ॥ ३८ ॥

---

[ ल ] आर्यपुत्र , किमामयार्तायाश्शिरस्यशनिः परिपात्यते आर्यपुत्रेण विना न पदात्पदमपि परिक्रामेयम् । नत्यजेयञ्च क्षणमपि आर्यपुत्रचरणपरिचरणक्षणं वनेऽथवा भवने । किन्नु मेप्राणनाथं परित्यज्य भ्रातुरथवा पितुःसदने । ननु सर्वाऽपि बन्धुता साध्वीनां स्वपतिरेव ।

**दमयन्ती** — (संस्कृतमाश्रित्य ।) किमेवमाह दृष्टधर्मोऽप्यार्यपुत्रः ।

हित्वा विभुं व्रजन्तं जनयितुरावासमाप्य जीवनतः ।
छायामनुयाय विभोर्विपिने वरमनशनेन संस्थानम् ॥ ३९॥

**नायकः** — प्रिये, न शृणोषि हितं अथ का वा नु गतिस्तवापि नजाने।

उत्खातिनीषु धरणीषु मुहुः पदाब्ज-
मुत्क्षिप्य शोणमभिवीक्ष्य निधाय भूयः ।
कर्तासि यानि पथि दुर्निमितान्यरण्ये
तानि क्षमाऽपि समुदीक्ष्य कथं क्षमेत ॥ ४०॥

किञ्च ॥ सास्त्रं सहस्खलितमातपतो रुदद्भ्यां
यावत् प्रयासि पथि साध्वि, समं शिशुभ्याम् ।
तावन्निरीक्ष्य कठिनानपि मे कथञ्च
प्राणानशीर्णमदयं हृदयं विसोढा ॥ ४१ ॥

अपिच ॥ हा नाथ ? क्षुधितौ सुतौ किमपि तत्खाद्यं पुनर्मृग्यता-
मित्येतत्सविषादबाष्पमबले, यन्मां पुरा वक्ष्यसि ।
यद्वा पक्षिसमं स्वपक्षपिहितं बालद्वयं बिभ्रती
निद्रास्यस्यधिभूतलं कथमिदं सोढा कृतान्तोऽथवा ॥ ४२ ॥

एतच्च ॥ नयन् मोहाद्राज्यं नृपतिहतकः पुष्करकरं
वनं वाञ्छन् वेश्म प्रवसतु यथेच्छं विधिहतः ।
कुतः पापः कर्षत्यथ सह शिशुभ्यां वरतनूं
प्रजानामित्युक्तीः कथमिव सहेय प्रियतमे ॥ ४३ ॥

इतरच्च । यस्मात्संयतचेतसोऽप्युदरुदन् सास्रं वसिष्ठादयः
यं सीमेति विदुश्शुचामसुसहस्तत्पुत्रशोको महान् ।
वैदर्भ तदभिज्ञतां न विनयेर्गच्छेस्तदीयान्तिकं
दौहित्राननवीक्षणात्सशमयेद्यन्मत्प्रवासव्यथाम् ॥ ४४ ॥

किंबहुना ॥ न त्वया विपिनावासो रोचते मह्यमंगने ।
शिशुभ्यां सहतद्गच्छ ? विस्रब्धं क्रथकैशिकान् ॥ ४५ ॥

**दमयन्ती** — (सगद्गदम् ।) भवतु यथाऽभिलषितमार्यपुत्रस्य

एनामत्र विहाय गन्तुमटवीं प्राणेश! नन्विच्छसि
स्वेच्छं गच्छ शिवं भवत्वसुमतामास्ते शरण्यश्शिवः ।
भाग्यं भाग्यमिदम्मदीयमतुलं जन्मापि पुष्यत्फलं
कीर्तिस्ते ऽप्यतिधार्मिको ऽयमिति सा भूष्णुश्चिरं भूतले ॥४६॥

( अश्रूणि मुञ्चन्ती किञ्चिदिव स्मयते । )

**नायकः** — ( स्वगतम् । ) नूनमियमवसानमेव सूचयति विरहय्य गमने । तदनुगच्छतु । ( प्रकाशम् । ) प्रिये, न शृणोषि मद्वचनं । शिशू वा विदर्भान् प्रति प्रहिणु ।

**दमयन्ती** — ( सहर्षम् । ) आर्यपुत्र, अनुगृहीता ऽस्मि प्रेषयामि सद्य एव वत्सौ ।

( नेपथ्ये । ) (सगद्गदम् । ) अम्ब, क्वनु नौ विसृज्य यास्यसि ?

**उभौ** — ( निशम्य सखेदम् । ) हन्त ! वत्सयोरिव स्वरसंयोगः, कथमिमौ दृष्ट्वा विसृज्य तावाश्वास्यचापुनरावृत्ति प्रस्थातास्वहे । हन्त गहनगहनतामवगाहते कालदुर्विलसितं ।

( प्रविश्य सह शिशुभ्याम् । )

**वार्ष्णेयः** — ( उपसृत्य सास्रम् । ) आयुष्मन् इमौ वत्सौ ।

आबाल्यादमलात्मनस्तव जगद्रक्षान्निरीक्ष्याधुना
किम्मे सादरमक्षधूर्तविहितामिच्छेन्मनोवीक्षितुं ।
सो ऽहं तत्समुपैमि काञ्चिदधुनैवान्ये यथेच्छं व्रज-
न्त्वायुष्मत्यथसौम्यदैवसुभगे सर्वे मिलामः पुनः ॥४७॥

**नायकः** — कुतस्तादृशी वा प्रत्याशा । नन्विदमात्यन्तिकं प्रवसनं । यतः ।

किं वोद्दिश्य निवर्तनं निरुपधि न्यस्ताहि सर्वाः श्रियः
किं कुन्तीय बलेन धिग्धिग शुभं दस्यापहारोद्यमम् ।
किं प्रत्यर्पयिता सएव तदिदं दस्योर्हि दूरे गिरां
किं वा सौम्यमतिर्विधिः प्रभविता तत्र प्रमाणं भवः ॥४८॥

**दमयन्ती** ( सास्रम् । ) वत्सौ, गच्छतमलमवलोक्य दुर्मार्गम् ।

( मूर्छति । )

वत्सौ — ( उपसृत्य सास्रम् । ) अम्ब; कुत स्त्वं निपत्य रोदिषि ।

( उपरि निपत्य रुदतः । )

नायकः — ( स्वगतम् । ) हन्त ! सुदुस्सहो ऽयं क्षणः । तत् कथमपीमामाश्वास्य परतः प्रसारयाम्येनौ । ( प्रकाशम् । कर्णएव । ) प्रिये ? समाश्वसिहि । यद्येवं त्वमेव रोदिषि, कथमिमौ विस्रब्धमत्रनौ विसृजेताम् । ( वत्सावुद्दिश्य । ) वत्सौ, नरोदित्यंबा । महासरीतिरियती; बाष्पपातश्च स्वान्तशातेन ।

दमयन्ती — (प्रत्यागत्य । ) वत्सौ; न किमपि मे विस्रब्धमेव स्तं ।

वत्सौ — अम्बा, क्वापि जिगमिषसीवाबुकेन सह । तत्सार्धमावाञ्च नय । ( रुदतः । )

उभौ — ( सास्रंपरिष्वज्य । ) वत्सौ, क वा यावः, कावागतिर्नौ वत्सौ विसृज्य ( मूर्ध्नोरुपाजिघ्रतः । )

वार्ष्णेयः — भृतकजीविनो ऽममैतद्भूवियोगः खेदमुपजनयति, किं पुनश्चिरादाधिपतेरायुष्मतः । किञ्च न शक्नोमि क्षणमपि वां समक्षमुपस्थातुम् । यतः ।

युवां यायः क्वेति प्रलपनपरौ वीक्ष्य तनुजौ
छलोक्त्या व्याख्यान्तौ मतमनु सबाष्पं सपदि वां ।
दशां चैनां वीक्ष्य प्रकृति कृपणो ऽप्यात्तकरुणो-
मनःपीडां वोढा नरवर, कृतांतो ऽपि नियतम् ॥४९॥

तदनुज्ञायतामेषः । स्वजनसान्निधिरेव हि सर्वदुःखकोशोद्घाटनकुञ्चिका ।

नायकः — ( सदृष्टिक्षेपं । )दत्ताम्यनुज्ञो ऽसि । सार्धं गृहीत्वैव गच्छ विदर्भान् । ( वत्सौ निर्दिशति । )

वार्ष्णेयः — यथा ऽऽज्ञापयत्यायुष्मान् ।

दमयन्ती — ( अवनिरुध्य । ) वत्सौ । गच्छतमनेन । गन्तव्यमानाभ्यां किमपि सन्नसन्निवेशदुर्गं तदचिरादायाश्यामः ।

वत्सौ — साकमावामप्यागच्छावः तनयतस्तौ ( निपत्य रुदतः । )

**उभौ** —हन्त ! दुर्गतिर्नौ । ( विषादस्तंभनाटयतः ।)

**वार्ष्णेयः** — आयुष्मन्; नन्वयमनर्थः स्वयं कृतः ।

**नायकः** — ( सखेदफूत्कारं । ) वार्ष्णेय, किमत्र क्लिष्टम्मां क्लेशयसि। यतः ॥ विपदिह सुसहैवाग्रे दुस्सहमनुयोक्तृवैशसं तदनु ।

मुसहव्यथा ऽपि पिटका रुजतितरां छेदनावसरे ॥७०॥

**दमयन्ती** — सन्ति हि तत्र भीषणामृगाः । ते कदाऽपि युवामाकर्षेयुः ।

**वत्सौ** — अम्ब, तर्हि मूतेनैव वर्तावहे । अपि निवर्तने फलान्युपनयेतं।

**उभौ** — ( सास्रम् । ) निवर्तने सकलानि फलान्यानयेव ।

**वत्सौ** — भवतु ( सुतपार्श्वगौ भवतः । )

**वार्ष्णेयः** — अप्यधुनैव प्रस्थानमुपक्रम्यते ?

**उभौ** — प्रक्रान्तस्य क्व पुनरुपक्रमः ।

(उत्थाय परिक्राभितकेन निवृत्य सस्नेहं वत्सौ परि . . . . .

हन्त विसृज्य गच्छावः, दुर्गतिरियती नौ ।( सास्रं निष्क्रमतः

**वत्सौ** — पितरौ, युवां क्वाप्यपुनरावृत्ति गच्छथः ।

( भूमौ निपत्य रुदन्तौ ) आवामपि साकं नयतम् ।

**उभौ** — ( अश्रूणि निरुध्य । ) नहि नहि । शरारुकुलसंकुलमरण्यमत्र गच्छावः । क्षणवियोगमपिवान्नसहते नौ मनः तदेवैवं शोचनं । भवतु । गच्छतं दक्षिणस्थेन । ( कराभ्यामुत्थापयतः । )

**वत्सौ** -- सत्यं फलैर्निवर्तेथे ? गम्यतां । ( उत्थाय वार्ष्णेयमनुसरतः

( नेपथ्ये ध्रुवा गीयते । )

मलिणसमअकिदभंगो पुक्खरलक्खीकिदत्तविसअंगो ।

कलिदललणेक्कसंगो ठाणा उच्चलइ को वि चक्कंगो ॥७१॥ [ ओं ]

**नायकः** — ( निशम्य । ) अस्मद्दशाऽविसंवाद्येव पुष्पलावीवचनं । ( वार्ष्णेयमुद्दिश्य । ) माचिरं । अन्यतस्तावत् । सन्निधिस्संतापयति नौ ।

---

ओं ] मलिनसमयकृतभंगः

पुष्करलक्ष्याकृतात्त[त्म]विषयां [शरां]गः ।

कलिततललनैकसंगः

स्थानादुच्चलति कोऽपि चक्रांगः ॥*॥

**वार्ष्णेयः** — यथादिशत्यायुष्मान् ( सहशिशुभ्यां प्रस्थितः । )

**दमयन्ती** — ( वत्सौ सास्रं पश्यन्ती । ) आर्यपुत्र, किमितो ऽप्यत्र, गच्छावआवामपि । ( प्रस्थिता । )

**नायकः** — ( अञ्जलिं बध्वा सखेदबाष्पम् । आकाशे । )

जन्मक्षोणि ? नमो ऽस्तु ते प्रकृतयः, सो ऽसावनुज्ञायतां
राज्यश्रीरधिपुष्करं समुदयेः, सेने ? सुखं स्थीयताम् ।
वत्सावप्यहमुत्सृजन्वनभुवं गच्छामि भोबान्धवाः !
सर्वेभ्यो ऽपि नमो ऽस्तु वस्त्वमहमप्यग्रे प्रमाणं विधे ! ॥ ५२ ॥

( परिक्रम्य । सानुकम्पम् । ) प्रिये न शृणोषि मद्वचनं केवलं व्यथसे । शृणु ।

अनुयास्येव हठान्मामथ विधिरेव प्रमाणमत्र तव ।
अमुमपि विसृजेयमहं न तु धर्मं नित्यसहचरं जह्याम् ॥ ५३ ॥

एहि साधयामस्तावत् । ( इति निष्क्रान्ताः सर्वे । )

इति श्री भट्टश्री पण्डितनारायणसुदर्शनीये कलिविधूनने
तृतीयोंकः — ( शिवाभ्यान्नमः । )

अथ चतुर्थोंकः

( ततः प्रविशति सहर्षसंभ्रमः कलिः । )

**कलिः** — आश्चिरेण कुसुमितार्थो ऽस्मि । यथाकिल ।

क्षोणिः कैतवकैतवाद्विरहिता दूरीकृतास्संपदो-
गाढं गाढमिदं वनं विरचितं निम्नोन्नतं सर्वतः ।
भ्रष्टावप्यथ तौ पथः पतिरसौ तद्वाद्विवस्त्रीकृतो
वैराग्यञ्च शनैः शनैरयमहो ! बध्नाति भैमीमभि ॥ १ ॥

तदेनमहमप्युपयामि । ( परिक्रम्य । पुरोवलोक्य । ) अये ? नन्वत्रैव सः ।

साध्वीं स्थाण्डिलशायिनीं सकरुणं सम्प्रेक्षमाणम्मुहु-
र्बाष्पोत्पीडजडीकृतोदरपटीसंगोढ्ववद्वेपथुम् ।
जीर्णं मण्डपमन्धकारितमाधिष्ठायालपन्तं मिथः
सम्म्राजं समुदीक्ष्य मे ऽपि हृदयं काञ्चिद्व्यथामश्नुति ॥ २ ॥

( विमृश्य । ) अथ वा किमनुशोचनेन, नन्विदं वैरनिर्यातनम् । तथाहि ।

न शोच्यारिपवः कष्टाः शत्रुणा स्वार्थसाधुना ।
असाराणि हि दारूणि जक्षित्यत्राशुशुक्षणिः ॥ ३ ॥

तद्त्रैव तिष्ठन् श्रवणमंगलान्यस्य विलपनान्याकर्णयानि ।(यथोक्तं कुरुते ।)

( ततः प्रविशति यथानिर्दिष्टः सहैव नायिकया नायकः । )

**नायकः** — ( दृष्टिमुन्मील्य, परितोविलोक्य । ) आः किमिदमन्धमस्मदीयदौर्भाग्यमिव सञ्चितं तमः । यतः ।

एकश्यामं वनमविषमं भाति भूमिस्समन्ता-
दुन्मीलयालं नयनमभितोदृश्यते ध्वान्तमेव ।
अस्मत्स्थानादपरतइह स्थानमुन्नेयमार्मान
प्राक्पश्चादप्ययदइव जगत्सर्गसंवर्तयोर्हि ॥ ४ ॥

किञ्च ॥ दूरेसञ्चरतः क्रिमेरपि पदन्यासध्वनिः श्रूयते
कूजत्यत्र न को ऽपि विष्किरकृते घूत्कारिणः कौशिकान् ।
उद्धूते तृणमर्मरे ऽपि मनमश्शंका वृकाद्यागते
विस्रब्धं भुजगाश्चरन्ति च मुहुः फूत्कारिणः सर्वतः ॥ ५ ॥

अपिच ॥ अभ्रं दुग्धइवाञ्जनं तरुवराध्वान्तं फलन्तीव नै
पातालं विशतीव भूररुणजामाकर्षनीवाटवी ।
कालेयः स्रवतीव वृण्वतइवाप्यंभोधरा मेदिनीम्
स्वर्भानुः श्रयतीव गां विगलतीवोग्रस्य हालाहलं ॥ ६ ॥

( स्मरणमभिनीय । ) हन्तेयं दशा नः । या किल ।

क्षोणीन्तां निषधांश्च तान् स्वजनतां तांश्च प्रजास्तास्तथा
पुत्रावप्यथ तौ श्रियश्च पुरि तास्त्यक्त्वाऽऽप्य घोरं वनं ।
व्याघ्रव्यालवृकाच्छभल्लगवलध्वाविन्मुखैरावृते
हन्तास्मिन् हतमण्डपे सहवधूं विश्रम्भयामि क्षपाम् ॥ ७ ॥

किञ्च ॥ सिंहासने विनतराजकवेष्ट्यमाने
संगीतके चलति बन्दिषु च ध्वनत्सु ।
आरामसीमनि पुरा स्थितवानिदानीं
[illegible] किं [illegible] ॥ ८ ॥

अपिच ॥ कर्पूरमेदुरपटीरकृतांगरागौ
मानेन च प्रणयतश्च विचित्रचेष्टौ ।
यावध्यशेवहि सितच्छद तूलतल्पं
तावेव धूलिमलिनौ शयिताविह स्वः ॥९॥
( दमयन्तीं सास्रं कराभ्यामवमृशन् । ) अये ! हन्त ! दमयन्ति !
जाताऽसि भूपभवने तदनु श्रिताऽसि
राजाधिराजसदनं सुभगा त्वमेव ।
एतत्तु दैवपरिभावफलं हि यद्वा
यद्दुर्भगं ययिथ मामयमस्य दोषः ॥१०॥
अपिच ॥ आचारचेलविलसत्कुसुमोपहारे-
ऽप्यायासतोविनिहितौ चरणाविमौ यौ ।
तावेव तीक्ष्णशिखरोपलसंकुलेऽस्मिन्
सूचीप्रकीर्णइव निष्करुणं विकृष्टौ ॥११॥
( चरणतलमवमृश्य सव्यथम् । )
स्पृष्टेऽपि यत्प्रणयतः कलहे पुरा मे
ऽप्यस्पृष्टकल्पमभवत्तादिदं पदाब्जम् ।
अद्योपलक्षतमुखस्तुतशुष्करक्त-
रेखाशतेन रुजतीह करं मनश्च ॥१२॥
अपिच ॥ असूर्यंपश्यत्वादाभिनवसुवर्णप्रतिनिधिः
तदा या ध्वान्तेऽपि प्रकटरुचिरायासमनुदत् ।
तनुःसैव ग्रीष्मातपतपनभिन्नच्छवितया
दुरीक्षं स्वान्तम्मे तिमिरयति शोकेन महता ॥१३॥
किञ्च ॥ कन्या क्षोणिपतेः समस्तवसुधानाथस्य काचिद्वधू-
रेवं दुर्गपथं श्रिता सुमहतीरार्तीश्चिरादन्वभूत् ।
इत्येतत्कथकाननादपि पुरा श्रोतुश्च शोचेन्मनः
पश्यन्नेव सदाऽपि तां कथमहं क्रूरोऽपि सोढा व्यथाम् ॥१४॥
( विचिन्त्य सनिश्चयम् । )॥ ईदृशरसाहचर्यान्मे वरमस्या विसर्जनम् ।

यत्तत्सदाऽपि क्लेशाय कादाचित्कव्यथं परम् ॥ १५ ॥

( सविमर्शम् । ) न किमिदमंगनापरित्यागोनाम महद्दुरितम् ( चिन्तयति । )

**कलिः** — ( सहर्षम् स्वगतम् । ) अयमवसरएवास्मदनुकूलः । तत्सन्निहितोभवन्नस्य धर्मचिन्ताम् दूरयामि ॥ तथाहि ॥

मयि सन्निहिते पुंसां क्व सा बुद्धिः सुधार्मिकी ।
विपिने वीरशार्दूले क्व गोश्चंक्रमणक्रमः ॥ १६ ॥

( सन्निहितोभवति । )

**नायकः** — अथवा किमेतद्दुरितमिति । नन्विदं महत्सुकृतम् ।यथा ।

इमानंगक्लेशानिदमपिच कान्तारतरणं
तथेमां दौर्भाग्याद्विषमितदशाश्चापि जहती ।
ध्रुवं कञ्चित्कालं वनभुवि विचित्यापि किल मां
प्रयायाद्विस्रब्धं पितरमथ सुस्थाऽपि भविता ॥ १७ ॥

किञ्च ॥ बाधेरन्नकदाऽप्यमूमिह मृगास्तद्वन्न हिंस्युः खगाः
व्यालाद्यान तथा दशेयुरनघां व्याधाश्च रुन्ध्युर्न ताम् ।
तत्तस्याः क्वचिदप्यहो न विपदस्तत्रैकपत्नीव्रतं
वीक्ष्य प्राप्तदयोविधिश्च सुमुखस्तस्याः प्रियं साध्नुयात् ॥ १८ ॥

स्वपिति चेयं विस्रब्धं तदेनामधुनैव विसृज्य यायाम् ।

( परिक्रम्य सास्रमाकाशे । )

भोभूतानि ! नमोऽस्तु वः प्रियतमां न्यस्यामि युष्मद्वशे
हे भद्रावनदेवताः ! वनभुवि त्रायध्वमेकाकिनीम् ।
अस्यां वा व्रज सौम्यतामथ विधे ! सर्वानुकम्प्या सती
न क्रौर्यादनुकम्पयैव विजहाम्यार्तां विलोकाक्षमः ॥ १९ ॥

( प्रियामवलोक्य । सस्नेहानुरागविषादं सास्रं मृदुपरिष्वज्य मुखमाघ्राय । )

हा ! प्रिये , । स्वान्तं हन्ति हतोपगूहनमिदं यात्रा श्रमायैव ते
पार्श्वे ते स्थितिरप्यहो ! मम शुभे जायां यतस्त्वामहम् ।
पाहि त्वं जनकं [illegible] विधेः सौम्य[illegible]
यायास्त्वं च पति[illegible] ॥ २० ॥

( विसृज्य शनैरुत्तिष्ठति । )

**कलिः** — ( सहर्षोल्लासम् । ) हन्त! सिद्धार्थोऽस्मि । ( नृत्यति । )

**नायकः** — ( गन्तुमिच्छन्नंशुकाकर्षणमभिनीय । साशंकम् । ) किमिदम् ।

दारुणमपि नौ दैवं न सहतइव सर्वथाऽऽवयोर्विरहम् ।
अथवा सममुभयानपि व्यथयितुकामं निवारयत्येवम् ॥ २१ ॥

( सवितर्कम् । ) ॥ दयितैव किं प्रबुद्धा
यद्वा भूतानि नेदमिच्छन्ति ।
अथवा रुणद्ध्यमुष्याः
प्रेमैव ( स्मरणमभिनीय । ) न; नन्विहैकासिचयौ स्वः ॥ २२ ॥

( निरूप्य । ) ॥ कथमिदमेषच्छिद्यान्निजतनुमात्रावशेष एषोऽस्मि ॥
( विचिन्त्य सगर्हम् । ) ॥ युवतेरप्यर्धांशुकमपहर्तुं यत्न एषवत ॥ २३ ॥

हा! धिक् । सर्वाःश्रियोविसृष्टाः प्रिया च सद्योविसृज्यते पश्य ।
अकरुण, शतधारास्थिर, प्राण, बुभूषस्यहो! त्वमेकाकी ॥ २४ ॥

भवतु । सति व्यथाऽनुभवशेषे सतीसि परतः कथम् ।
अजनाध्युषितं स्थलमिदमपघनशेषश्च कथमहं यायाम् ।
अकरविदार्यं वसनं क्व तदुपकरणञ्च खण्डयितुम् ॥ २५ ॥

सर्वथायमशक्यप्रतीकार एव दुर्विधिरावयोः ।

( दीर्घमुष्णं निश्वसन्नेव पुनरुपवेशन्नाटयति । )

**कलिः** — उपकरणाभावान्नस्याः परित्यागे प्रत्यूहः । पनिपातयामि च्छुरिकाम् । ( इति यथोक्तं करोति । )

**नायकः** — ( पतनध्वनिंनिशम्य । सविस्मयम् । ) कथमयसइव पात्यमानस्य स्वनः! तद्यावत् पश्यामि ।

( करेण तलमवमृशन्स्पर्शमभिनीय गृह्णन् । ) कथमयोमयी च्छुरिका

( सशंकम् । ) अथ कोन्विदं निक्षिप्तवान् कथमिदमवसरानगणमभिनि पातितम् ।

किं कोऽप्यत्र निशाचरश्चरिपुस्तां यापयत्याशुमां
किंवाऽसौ समिपं स्वपित्वथ मम प्रेमाणमन्वीक्षितुम् ।

नैवैतद्द्वितयं ध्रुवं हतविधिस्साह्यार्पणेनाप्यहो
आवामद्य वियोगिनौ कलयितुं विस्पष्टचेष्टावहः ॥ २६ ॥

आस्तां यद्वा दुर्विदानि नाम दैवरहस्यानि । तदवलुनामि वसनममुनैव ललनायाः । ( इति यथोद्दिष्टम् । करोति । )

**कलिः** — साधु रे साधु समार्वर्जितसौभाग्यमदोऽसि ।

**नायकः** —

( विलूय खण्डमादाय परिधाय गन्तुमिच्छन् सखेदमुपविश्य नायिकां चुम्बन् । )

प्रिये !! ॥ आपृच्छा मे वदनस्पर्शोऽयं भवतु यामि सुखमुग्धे ।
मा स्म मृतिमध्यवस्यः सति तव भाग्ये समेतास्मि ॥ २७ ॥

( मुहुर्मुहुः सबाष्पं मुखमाचुम्ब्य उत्थाय दिशोऽवलोक्य । )

अम्भसि निमग्नस्येव मम तामिस्त्रस्थस्य न किमपि दृष्टिगोचरतामेति । तत्प न्थावा कथमधिगम्यते ? ( पुनरुपविश्य । सकरुणम् । )

प्रिये ॥ निर्मानुषे निजपदैकगतिं कृशांगीं
एकाकिनीमसृजमित्ययि मास्म कुप्यः ।
मा चान्यथा चकलथा विपदम्ममात्र
यातोऽस्म्यथाऽपि तव सुस्थितिरस्त्वितीव ॥ २८ ॥

किञ्च ॥ मद्विप्रयोगकलनावसरोद्गतानि
बाष्पोदबिन्दुपटलानि पितुर्निकाय्ये ।
वक्रं विलोक्य सुतयोः शमयस्व कामं
वामेक्षणे , कथमपि स्वयमाश्वसन्ती ॥ २९ ॥

अपिच ॥ माक्षैर्दीव्यइति श्रुतिं न गणयन्यद्द्यूतमाधां पुरा
यच्च त्वाञ्च हितंवदामधुनवं तद्व्रजामन्त्रिणः ।
यद्वा त्वा सममानयं वनमिदं यच्चोपवस्त्या भृशं
मृद्वंगी च विशोषिताऽसि फलितं तेषां वियोगः फलम् ॥ ३० ॥

किंबहुना ॥ तदेषगच्छामि विसृज्य च त्वां
ललाटलेखासरणिर्ममैवम् ।
या हि त्वमथैव पितुर्निकेतं

विभिन्नभाग्यः खलु जीवलोकः ॥ ३१ ॥

( सबाष्पनिरोधम्मुखम् मुखे निक्षिप्य क्षणं स्तम्भनाटयित्वा सनिश्वासम् । )

अलं विलम्ब्य, कृतं परिदेवनेन ; सत्वरमेषप्रतिष्ठे । ( उत्तिष्ठति । )

कलिः — अहमपि काञ्चिदाकालिकीं विद्युतमिव कामपि प्रभामुद्भाव्य निर्वासयाम्येनम् ।

नायकः — ( उत्थाय परितोऽवलोक्य । ) दिष्ट्या काऽपि प्रभा प्रादुर्भवति ( विमृश्य । साशंकम् । )

आकालिकीं रुचमिमामचिरांशुकल्पां
अन्याप्रवेश्यविपिने तमसेश्च पातम् ।
उत्पातमेव कलये विपदस्तु तस्मात्
कष्टाममैव न पुनर्युवतेर्भवन्तु ॥ ३२ ॥

अतीतः प्रियायाः सुषुप्तिकालः तदनुचितामितोऽपि विलंबनम् । ( स्तोकं परिक्रम्य । सास्रं पुनर्निवृत्य प्रियामुद्दिश्य । ) प्रिये ! अथ प्रतिष्ठे अस्थिदमापृच्छा ते ( उपविश्य मृदु मुखमाचुम्ब्य सकरुणम् । ) प्रिये ! कागतिर्मन्दभाग्यस्य ।

कालश्चोदयति त्यजेति हृदयं न स्थैर्यमालम्बते
यातायातकथैव चेतसि पदेऽप्यार्तिं प्रसूते पराम् ।
कान्तारञ्च कथन्तरेयमनघे ! चिन्ताम्बुधिं वा प्रिये !
गच्छाम्येषकथञ्चिदाप्नुहि पितुर्गेहं वने मा स्म भूः ॥ ३३ ॥

( साभ्यर्थनम् । ) क्षेमार्थं पुनरागमार्थमबले, हर्षादनुज्ञायताम्
( सोपालम्भम् । ) दुर्दैवान्विहि मां सुदैवमनघामाराध्यतु प्रेयसीम् ।
( सभक्त्याकाशे । ) रक्षावां करुणानिधे कलिमलध्वंसिन् कपालिप्रभो
( साञ्जलिबन्धम् । ) दीनानाथशरण्यतां विशदयेर्मातर्महेशप्रिये ॥ ३४ ॥

( कतिचित्पदानि परिक्रम्य परिवृत्य विलोक्य सबाष्पम् । )

न सरतः पुरतश्चरणौ प्रिये
न च धृतिं भजते हतमानसम् ।
न खलु वश्मि विहाय विदौकितु

ननु तथाऽपि नुदत्यथ कोऽपि माम् ॥ ३५॥

किञ्च ॥ अन्यतोगच्छतोऽप्यस्य सर्वथा धुरि ते स्थितिः ।

क्वापि यातोऽहमित्यार्ये, मुधा मा स्मात्र शीर्यथाः ॥ ३६ ॥

अपिच ॥ पापः कालवशात्त्यजामि भवतीं किं वाऽन्यथा प्रेम नौ

तत्तादृग्विरहक्षमञ्च भवितेत्यालोच्य दैवीं गतिम् ।

आत्मन्येव समाश्वसिह्यथ सुतावात्मानमप्यादरात्

प्रत्याशाकलनादखण्डितमहं तावत्पुषाण प्रिये ॥ ३७ ॥

(सविषादस्तम्भम् पश्यन्नेव स्तिमितम् तिष्ठति ।)

**कलिः** — अहमप्येतदवलोकितुन्नक्षमे । तदन्यतो गत्वाऽस्य शीघ्रापसरणोपायमुद्भावयामि यावत् । (इति निष्क्रान्तः ।)

**दमयन्ती** — (निद्राभंगमाटयन्ती परिवृत्य शेते ।)

**नायकः** — (सभयसम्भ्रमविषादम् ।) तदितः क्षणमपीह न स्थातव्यं । यदुद्बुध्यतीव प्रिया ।

(स्तोकमन्तरं गत्वा आकाशे "भोभूतानि" इत्यादि पठन् प्रस्थितः ।)

(नेपथ्ये ।) आः! सुप्रभातमयनं जनितं दृशान्नः

प्रातस्तनः शिशिरवानिह वाति वातः ।

निर्बन्धबन्धमपहाय सरोरुहिण्याः

निष्पातुकः कथमपीह रवीति भृंगः ॥ ३८ ॥

**नायकः** — (निशम्य ।) पथिकानामिव स्वरः प्रभातेव विभावरी तदितोऽपि न विलम्बनीयम्।

धृतिम्मतिम्मुदमपि सार्धमेतया

निवर्तयन्नहमिह देहमात्रतः।

वनं व्रजाम्यथ मरुतामधीश्वरौ

शिवांविमामवतमहो! पतिव्रताम् ॥ ३९॥

(इति सार्तं दर्शम् दर्शम् स्थायं स्थायं [illegible] निष्क्रान्तः ।)

नेपथ्ये । सहस्ततालम् । ) अद्य [illegible] अद्य [illegible] कृतकृत्यः।

ननु प्रभामाकलय्य [illegible]

(इति यथोक्तं करोति ।)

दमयन्ती — (परिवृत्य । प्रबोधनाटयन्ती । मीलिताक्षमेव साञ्जलिबन्धम् ।)

अवियोगदशाविशेषविज्ञं
अकुत्राश्लेषसुखाशमक्षतोष्ठम् ।
अतितृप्तमखण्डमोदमाद्यं
अमलं वस्तु मुदेऽस्तु मेऽर्धजानि ॥ ४० ॥

अपिच ॥ सच्चित्सुखात्मकमखण्डतपोऽधिगम्यं
पारेतमःप्रविलसत्तरुणारुणाभम् ।
यद्रज्जमुद्यादिव भूतसमूहभीमं
भैमं महस्तदिह नः कुशलाय भूयात् ॥ ४१ ॥

(ध्यानमिव नाटयन्ती सगद्गदम्) हा ! भगवन् भवानीपते ! किमेवमावयो र्दुर्दशामेव फलसि, तद्यथा ननु पश्यसि

क्षोणीमिवानुपमितां श्रियमप्यमेयां
प्राणादपि प्रियतमौ तनयौ च हित्वा ।
जायापती कथमपीह शरीरवृत्तिं
कुर्वः शिवेह विधृतैकपटच्चराग्रौ ॥ ४२ ॥

किञ्च ॥ न शृंगारक्रीडा न च युवतिभूषाविधिविधा
य विस्रंभालापानच्च रुचिमदास्वाद्यमथवा ।
न वा निर्व्यापारं सुखशयितमार्तार्तिहरण !
प्रभो ! यात्रापीडाप्रलपनमयं सर्वमिह नौ ॥ ४३ ॥

अपिच ॥ यं द्रष्टुं चिरतः प्रपन्ननगरद्वाराधराजानय:
यस्याः सौम्यकटाक्षवीक्षणयुजे दिक्पाश्च यत्नानधुः
अद्यैवं सच सा च शंकरगुरो ! कान्तारगर्भे गतौ
पान्थैरप्यवगण्यमानवपुषौ वर्तावहे वीक्ष्यताम् ॥ ४

एतच्च ॥ यदखिलजगतीशश्रेणिकोटीरकोटी-
अर्पितकुसुममालोन्मृष्टचूडीपितानाम् ।
तदिह शितशिलाग्रे कानने क्लिश्यमान

शिवशिव ! शिव , पश्य प्रापितं कान्त्ववस्थाम् ॥ ४५ ॥
( करंसव्येनान्यतश्च प्रसार्य । साशंकं दृशमुन्मील्य । सवितर्कम् । स्वगतम् )
अहो क्वार्यपुत्रोऽपि प्रचलितः ?
किन्निद्रावशतः क्वचिल्लुठितवान् किं वा कुतश्चिन्न स्थितः
किं वाऽऽस्ते पुरएव मे घनतमस्सत्वान्मदन्वीक्षया ।
किं वा स्वप्नगिहत्यहिंस्त्रनिवहैः कृष्टः क्वचिच्चेष्टते
सर्वं तत्स्फुटयामि (प्रकाशम्) हा ! प्रियतम प्राणेश्वर क्वास्यहो ॥४६
(क्षणंविरम्य सभयविषादम् । स्वगतम् । ) आः ! कागतिः ! हाधिक् !
किमार्यपुत्रोऽपि वियोजितोऽधुना
कथं सयातः परतोदिगंबरः । ( वसनमवमृश्य । सनिर्णयम् । )
हहा ! हताऽस्म्यस्मि निकृत्तमम्बरं
विरक्तएव क्वचिदद्रवत्प्रभुः ॥ ४७ ॥
किञ्चिदिव परिक्रम्य पश्यामि तावत् । ( सहसोत्थाय सत्वरं परिक्रम्य कुड्यताड मभिनीय सव्यथम् । स्थित्वा सास्रम् । ) धिगिदन्तमः यन्मम दौर्भाग्यमिव प्रतिक्षणं बहुलीभवति । तत्कथमहममुमधुना विचिनुयाम् । अथवा किमस्य विचारेन । यतः ।
निशीथे निद्राणां जहदथ विखण्ड्यापि वसनं
प्रयातोऽसौ प्रेम्णा किमु पुनरुपैता मम धुरम् । (विचिन्त्य । सोत्सुक्यम् । )
विमुच्यैवं यातोऽप्यनुशयधुरा किन्नु न भवेत्
पथि स्तब्धस्तस्मात्कथमपि च सद्योविचिनुयाम् ॥ ४८ ॥
( पुरःप्रसारितकरतलमवनतपूर्वकायं विचारं नाटयन्ती । सविषादम् । )
वीक्षे पदांकमिति चेन्न तलं सुदर्शं
शब्दापयेयमिति चेद्रसना निरुन्धे ।
ध्वांन्ते गते विचिनुयामिति चेत्सयाता
लब्धा क्वचित्सइति चेद्भ्रमतीह चेतः ॥ ४९ ॥
किञ्च ॥ किं सौख्यमापि सुदृशं महता प्रियेण
किं वाप्यलंभि विधिना पटु हिंसनाऽऽवाम् ।

किं वेक्षि मां जनयता जनकेन वाऽत्र
किं वान्वभावि च मयाऽप्युत जन्मभाजा ॥ ५० ॥

प्रत्युत ॥ आदावस्य गुणश्रुतिव्यसनिता क्लेशस्ततः प्राप्तये
पश्चात्तत्सुरदूत्यतस्तदनु तद्द्वेषाढ्यदिक्पालतः ।
शार्यक्षादथ निष्क्रमात्परमटव्याप्तेरथोऽस्मादिति
क्लेशायैव कृतोदयाऽस्मि धिगिदं भीमात्मजायाजनुः ॥ ५१ ॥

आः ! कः कर्मपरिपाकमप्यन्यथयितुमीष्टे ! हन्त ! हा ! धिक् !

धिक्प्रत्नकर्म सततं सुखितैकमाथि
धिग्वेधसं कुटिललेखनबद्धदीक्षम् ।
धिग्दैवमार्तजनतार्तिकरं पुनश्च
धिङ्मर्त्यजन्म धिगिदं जननं वधूनाम् ॥ ५२ ॥

तत्रापि सर्वथा धिङ्मम जननम् । ( सोच्छ्वासमूर्ध्वमवलोक्य ) हन्त ! तमसि न लक्ष्यते किमपि ।

देवाः क्वास्ति मम प्रियोदिगधिपाः क्वास्ते वआशीर्विधिः
शंभो , मामव हैमवत्ययि पतिं देह्यद्य मे वल्लभम् ।
धातर्ब्रूहि किमेवमेव भवितास्म्यत्यन्तमेकाकिनी
ब्रूतैनं वनदेवताः सकरुणं रुन्धं प्रियं रोदसी ॥ ५३ ॥

( क्षणं विरम्य सनिश्वासम् । ) न किमपि प्रतिवचः अथवा स्थाने खल्विदम् ।

यतः ॥ क्रीडाजागरशोणकोणमपि मे नेत्रं निरीक्ष्यैव यो
मन्मानोदयशंकया पटुतरं चाटूक्तिकारः पुरा ।
हित्वा क्वापि सएव दूरमगमद्देवाः परे किंपुनः
मामाश्वासयितुं न कोऽपि मम तद्दौर्भाग्यधाम्नः फलम् ॥ ५४ ॥

भवतु विचिनुयाम् । ( मण्डपावतारं नाटयंती स्पर्शमभिनीय । सहर्षम् । ) अये ! किमप्यतिशीतस्पर्शमसुमदंगमिव लक्ष्यते । ( कंचुकमवमृश्य । सहर्षोल्लासम् । ) आर्यपुत्र , लग्नोऽसि हि सहैव वाससा । अपि मां रोदयितुमेवमवतीर्य मण्डपमधितलमतिनिभृतमेव शेषे । ( दोर्भ्यां सप्रेमानुरागमालिंगन्त्येव । विमृश्य । ) ( ससाध्वसम् । ) हहावाहसः ! बाहसः !

(तिलिप्सः --मुखं व्यादाय पादौ दृढं कबलयति।)

**दमयन्ती**—हाधिक् ? हन्त ? अब्रह्मण्यम् ? अतिसंहितास्मि शयुना ; हाहताऽस्मि हा अनाथाऽस्मि, क्वासि प्रिय ! परित्रायस्व ! पाहि नील कण्ठ पाहि ( इति क्रोशति। )

( तिलिप्सः — वपुराकर्षन् बिलमुपसर्पति। )

**दमयन्ती** — एतैत देवाः अजगरोऽजगरः !! अशरणायाश्शरणं शरणं, हन्त हन्त ? बिलमयम्मां नयति, शुभमार्यपुत्राय शिवायोंनमः

( इति तिलिप्सेन कृष्यमाणैव बिलप्रवेशं नाटयन्त्येव निष्क्रान्ता। )

इति श्रीभट्टश्रीपण्डितनारायणसुदर्शनीये

कलिविधूननाटके विप्रलंभोनाम चतुर्थोंकः शिवाभ्यांनमः

---

## अथ पञ्चमोंकः

( ततः प्रविशति लज्जानाटयन्नेलापत्रः। )

**एलापत्रः** — कथमिदं वक्तास्मि स्वामिने । यत्किल ।

शीलाग्नेशिखयैव तामसहनादुत्स्रष्टुकामे मयि
व्याधोऽयं बत ! काकतालकलया प्राप प्रतिष्ठां पराम् ।
इत्थान्नाम विदर्भजामभि विधिर्जज्ञे प्रसन्नान्तरः
तद्वन्मामभि वैषमीं धृतिमधात्स्वाम्यर्थवैघातुकीम् ॥ १ ॥

तदलं विचिन्त्य; आख्येयमेव निखिलमप्याज्ञावर्तिभिरर्याय । आस्तामिदं।

एतावन्तमनेहसं प्रभुरभून्न क्वापि कुण्ठोद्यम-
स्तस्यैषा प्रथमावतारसरणिर्भंगस्य भूष्णोरितः ।
दंपत्योरथवा तयोरिह कियत्पर्यन्तमास्तां विपत्
सोर्ध्वाधःक्रमतोदधाति हि गतीः प्रायोदशा देहिनाम् ॥ २ ॥

(परिक्रम्य पदान्तरे स्थित्वा पुरोविलोक्य सवितर्कम्। )

आनीलमूर्तिरतिमात्रशरीरवर्चाः
आलोलकुण्डलयुगारुणगण्डभित्तिः ।
आच्छादिताच्छवसनः स्वयमानवक्त्र-
आयाति संस्तुत[illegible] कोऽसौ ॥ ३ ॥ ( पश्यति। )

( प्रविश्य । [illegible] कर्कोटकः ।)

**कार्कोटकः** — (स्वगतम् ।) सत्यमनृणोऽस्मि । यत्कृतस्य प्रत्यकार्षम् । तथाह्यनेन ।

विस्फारितं सुचरितैः प्रथितं यशोभि-
रानन्दितं सुरवरैर्जितमात्मना मे ।
दीप्तं कुलेन च कृतज्ञतया समिद्धं
यस्मिन्सति स्थितिमतां कृतमन्यपुण्यैः ॥४॥ (सत्वरं परिक्रामति ।)

**एलापत्रः** — (विमृश्य सहर्षम् ।) कथमस्मत्प्रियमित्रं कार्कोटकः । तदेनमभ्युपगच्छामि । (इत्युपसृत्य ।) सखे, स्वागतम् ।

**कार्कोटकः** — (निशम्य निर्वर्ण्य स्वगतम् ।) नन्वयं कलेः प्रियमित्रमेलापत्रः । किमनेन संलप्य । यद्वा संलप्यैव तावदुपजपाम्येनम् । (प्रकाशम् ।) सखे, चिराद्दृष्टोऽसि । (परिष्वजते ।)

**एलापत्रः** — (सकुतुकम् ।) सखे, कथमिव मुक्तशापोऽसि ।

**कार्कोटकः** — शृणु ॥ दैवान्मां दवदावपीडितमपाद्भूतानुकम्पी नलः
शापादप्यथ मोचितोऽस्म्यनुपदं तद्गात्रसंस्पर्शतः ।

**एलापत्रः** — (स्वगतम् ।) किमयमाह नलं भूतानुकंपीति ।
(प्रकाशम् ।) ततस्ततः ।

**कार्कोटकः** — (स्वगतम् ।) न प्रतीपपक्षवर्तिनस्सकलमपि विस्तरणीयं ।
(प्रकाशम् ।) ॥ तस्मै तत्र मनाङ्मयाप्युपकृतं प्राणप्रदातुः पुनः
किं वा निष्क्रयतामिहार्हति सखे, पादत्राणामात्परम् ॥५॥

**एलापत्रः** — (स्वगतम् ।) अधिकमनुरज्यतीवायन्नले । तदेनमुपजपामि तावत् । (प्रकाशम् ।) सखे, कथममुमात्थ भूतानुकंपीति ? यतः ।

कालाद्बहोः समुपभुज्य परं पुरस्थां
आनीय काननमतिव्यथयन् पदव्याम् ।
निद्रादशामवकलय्य जहन्निशीथे
दूरं गतस्साकिल भूतचयानुकम्पी ॥६॥

**कार्कोटकः** — (स्वगतम् ।) सत्यमेवमामुपजपितुमिच्छति । (प्रकाशम् ।) सखे, मैवं महदवमानना ।

प्राप्तः कालवशादयं वनभुवं सामान्यमाकर्ण्य च
श्राम्यन्तीं सममेव तामधिपथं द्रष्टुं सचासासहिः ।
पातिव्रत्यममूमवेदियमपि प्राप्ता पितुर्गेहमि-
त्यालोच्यैव निशीथएव शयितां मुञ्चंस्तपस्वी गतः ॥७॥

एलापत्रः — ( निशम्य सगौरवम् स्वगतम् । ) यत्सत्यमयमसौ महात्मैव परमयन्नः प्रभोरेव परमोदोषः । भवतु संशयमनवशेषमवच्छिनद्मि ( प्रकाशम् । ) गच्छताऽपि किमर्धांशुकमपि विखण्ड्य गन्तव्यम् । न कि सावधर्मः सामिनग्नंकरणमनग्निकायाः ।

कार्कोटकः — क्रूरः कालः कलिरिति सखे, कोऽपि कादम्बमूर्ति-
र्वासोऽप्यस्याहरदथ मिषात्प्राक्तनैश्वर्यशेषम् ।
तस्मान्नग्नीकृतवपुरसौ किन्तथैव प्रयाता
चेलार्धन्तत्परमपहरन् क्काऽपि लीनस्तपस्वी ॥८॥

एलापत्रः — ( स्वगतम् । ) यथा दृष्टमाह प्रियवयस्यः । योगिमम कारणक्लेशिनं कलिम् । ( प्रकाशम् । ) सखे, सत्यमसौ भूतानुकंपी , य देषचेलापहारिणमपि कलहंसन्नावधीत् । ( स्मरणमभिनीय । ) हन्त ! तामि या च संमत्येव मयाऽध्यक्षिता ।

कार्कोटकः — ( सकुतुकम् । ) कथमिव क्कवा, कीदृशीवा ।

एलापत्रः — केनापि किरातेन निरूप्यमाणाध्वा निकामरुदितमेव कापि समुच्चलन्ती नातिदूरतइतएव प्राच्याम् । अनुधावताऽपि दृश्यैव मा।

( नेपथ्ये । ) भोभिल्लमल्ल, श्रूयताम् ।

प्राणार्पणेन सविताऽसि ततः सुताम्माम्
किं दुर्विभाव्य परधाऽसि चिकीर्षुरंहः ।
मामीदृशीम्ममदशामियतीं च वीक्ष्या-
प्येषामतिस्तव वरं गतिरन्यतोमे ॥९॥

कार्कोटकः — ( विभाव्य । ) अये, कस्याश्चित्कान्तायाइव करुणःस्वरः

एलापत्रः — ( सावमिव । ) मन्ये दमयन्त्युरेवेति ।

(पुनर्नेपथ्ये।) कान्ते! किमात्थ तदंहइति। श्रूयताम्।

विधिः पुत्रीं पौत्रीं विधुरपि मुनिस्त्रीरपि हरो
गुरोर्दारांश्चन्द्रोऽप्यथ गुरुरुतथ्यप्रियतमाम्।
मृगीमत्रिर्घोटीमपि रविरहल्यामपिवृषे-
त्यसौ घण्टाघोषस्सरणिरियमार्यैरपि धृता ॥ १० ॥

अपिच ॥ व्याधोप्यहं करुणया यदपामहेस्त्वां
यन्मूर्छितां समुदजीवयमुक्षणेन।
यद्वा ऋजुं सरणिमप्यनयं वरोरु
सर्वन्तदत्र भवतीमुपभोक्तुमेव ॥ ११ ॥

किञ्च ॥ सुतामाचार्याणां शमधनवधूर्वाऽथ सहजा
मगर्भ्यस्त्रीमाहो मनसिजविमोहेन वृणताम्।
ततस्तत्पापानां किमनुगुणमेषामुपनतं
फलत्वेनेत्येतत्परमविदितं ते जडमते! ॥ १२ ॥

कार्कोटकः — (निशम्य। ससम्भ्रमम्।) आमाम् । रुन्ध इव कोपि तां पापः पुलिन्दः। तदनुधाव्य सजवममूमवावः। (त्वरितमुपधावतः।)

(पुनर्नेपथ्ये।) अये, श्रूयतामिदमिदं हितम्।

मास्माविचारण, रुजस्तरुणीमनाथां
बाधाऽपि मे नहि मुधा भवितैकपत्न्याः।
उज्जीव्य मामथ मयैव लयाय मा धाः
उज्वाल्य वह्निमयिता स्वयमेव कस्तम् ॥ १३ ॥

अपिच ॥ शिशूचक्रे काचित्प्रकृतिपुरुषांस्त्रीनपि पुरा
प्रभावात्सा काचिद्व्यरुणदरुणं द्रागुदयिनम्।
पुनःकाचित्कालश्रितमपि पतिं प्रापदनवा
न तत्पातिव्रत्यं रहयति कदाचिद्वरवधूः ॥ १४ ॥

एतच्च ॥ यद्वात्रानुकृतः स्त्रियाश्च सरणं स्वाहाविभोर्दुर्लभं
यस्याश्च व्रतसौभगाच्च्युतवधूवैधव्यदीक्षाक्षयः।
याघाघा[illegible]जनताद्वयं पुरस्तात्पुरः

तासामण्वपि नैव वेत्सि चरितं येनेति मां बाधसे ॥ १५ ॥

**कार्कोटकः** — सखे, किमपि जिह्मं कर्तुमुद्यतइव वराकः। (द्रुततरं धावतः।)

(पुनर्नेपथ्ये।) वरारोहे! वन्यप्रलयकृति धर्मोनु मृगयौ
कृपाख्या सा का वा किमिह करभोरु! प्रलपितैः।
वृतिं वाञ्छेर्यद्वा मृतिमतिघनश्रोणिजघने!
कचाकृष्टिस्सैषा सुखयतु न वा मां गुरुकुचे! ॥ १६ ॥

**उभौ** — (धावन्तावेव सखेदसंभ्रमम्।) हहा! पापं! पापं!!

(पुनर्नेपथ्ये।) अदयं यदये स्मयादमूं
विरहार्तां विपिने विसंश्रयाम्।
अभिभूय वशे चिकीर्षुर-
स्यथ तद्दुर्भग! भस्मसाद्भवेः ॥ १७ ॥

**उभौ** — (सहर्षम्।) शपनीयएव चण्डालः।

(पुनर्नेपथ्ये।) धिक्त्वां किं वोत्सृजेयं वनमनु वनिते ....हाकिमेतत्समिंधे!
ज्योतिर्द्यावापृथिव्योःप्रसृमरकपिशज्वालजालासुदर्शम्।
(सकरुणंनीचैः।) हा! हा! प्लुष्ये! हहाहो! (चीत्कारः। विरामः।)
(सकरुणगद्गदं सनिश्वासफूत्कारम्।) बत! बत! हतया दाहितोऽयं वराकः
भस्माप्यस्माद्दृशोर्मे पतति लघु कृतो निष्क्रयः स्वोपकर्तुः ॥ १८ ॥

**उभौ** — (सहर्षताण्डवम्।) साधु दग्धः पापीयान्, अहो! अस्यादयालु-ता। यदाततायिनमपि विप्रकृतमनुचिन्त्य शोचतीयम्।

(पुनर्नेपथ्ये।) अवसितोऽत्र विजयः। परममुनैव महापथेन गच्छन्ती प्रियं विचिनुयाम्।

**उभौ** — असांप्रतमेव सांप्रतमस्यास्समुपसरणम् तदपसरावस्तावत्।

(इति निष्क्रान्तौ।) इति शुद्धविष्कंभः। शिवाभ्यांनमः।

(ततः प्रविशति सभयविस्मयसम्भ्रमा दमयन्ती।)

**दमयन्ती** — (निपुणं निरूप्य।) आः किमन्तर्हितमवलोकयन्त्याएव मम सकलमपि।

तपोवनं तत्र च पर्णशालाः

तासु प्रवादाश्च तपोधनानाम् ।
तत्सर्वमद्यास्त दृशोः पुरस्ता-
त्कथं श्रितं स्वप्नपुरस्य शोभाम् ॥ १९ ॥

आस्तामिदम् ; नन्वेवमेव तेषां भाषितमपि । तद्यथा ।

भद्रे , मा स्म शुचस्त्वमेव पुनरप्याप्स्यैनमेव प्रियं
विध्यस्मान्प्रणिधानतोऽभिदधतस्तास्ताः श्रियः प्राप्स्यसि ।
दैवी धोरणिरद्य वामसुरमा कालः कियान् क्षम्यतां
क्षीणा चान्द्रमसी कला किमु तथैवासीत वृद्धेर्विना ॥ २० ॥ इति ॥

ननु दण्डापूपिकयैव बोध्यमिदमप्यनृतमेवेति । सति कुड्ये हि चित्रकर्म (परिक्रामन्त्येव सविमर्शम् । ) आः किमिदमनुचिन्त्यमानमाश्चर्यायैव मे । यतः ।

निद्राद्यागलिताश्चिराय किमियं स्वप्नायते जाग्रती
किं वा जालकथा तथेह ललने किं लभ्यते जालिकैः ।
संकल्पः सृजतीति किं न हृदि मे पत्युः परं किञ्चन
स्यादन्या विधिदुर्विलाससरणिर्यत्सा हि नानाविधा ॥ २१ ॥

अपिच ॥ क्षणमिव सुखलेशस्तत्क्षणं दुःखधारा
क्षणमथ च न किञ्चित्तत्क्षणं तद्द्वयीति ।
अहह ! विधिविलासोजालजीवीन्द्रजाल-
प्रतिनिधिरिह किं किं दर्शयत्यात्मभाजाम् ॥ २२ ॥

आस्तामिदमनयैव सरण्या परिक्रामामि । ( इति परिक्रम्य पदान्तरे स्थित्वा वृक्षानवलोक्य सादरमञ्जलिं बध्वा सकरुणं सप्रश्रयम् । )

अस्यै प्रसीदत वनस्पतयोनमोवः
क्वास्ते मम प्रियतमः कलुषीकृताक्षः ।
तत्स्वापतेयमनवं मयि निर्वहन्त्यां
ब्रूध्वं कुतः प्रभुरिमामपकर्ष्य यातः ॥ २३ ॥

किञ्च ॥ तिलक ! तिलकः क्वास्ते ; क्वासौ रसाल ! रसालयः !
सरल ! सरलः क्वेक्ष्यः ; क्वाप्यः कदंब ! कदंबरीः ।

बदर! वद रे नाथं ; मुञ्चेर्न चन्दन चन्दनं
फणस! फण सक्क ; त्वं रुन्ध्यालवंग! लवंगमम् ॥ २४ ॥

कृतमिह कृपाशून्यानां वस्समभ्यर्थनया। नन्विदमभाग्यमल्पभाग्यायामे।
( बाहूप्रसार्याकाशे। )

हा! मातः, किमममूमसूत भवती दुःखैकशीलां मद्रा
क्वासि क्वासि पितस्त्वदेकतनुजा नाथेन मुक्ता वने ।
भोभ्रातर्हतसोदरीं मुहुरनुध्याय व्यथां मा स्म गाः
भद्रं ते ! जनते न मामिव सुतां चित्तेऽपि जातु स्मरेः ॥ २५ ॥

हानाथ ! हाकरुणानिधे ! हा भगवति भवितव्यते ! हा भगवन् भवानीपते !
कागतिरितः करुणविलापिन्याः ! किं शरणं क्वा यानम् ।

अहह ! युवतिमात्मच्छायया तुल्यवृत्तिं
प्रियतम ! चिरकालादात्तविस्रंभसुप्ताम् ।
कथमिव विजहानोनिर्जिहानोऽप्यभूस्त्वं
मतिरपि तनुभाजां भिद्यते दुर्दशायाम् ॥ २६ ॥

अपिच ॥ अपि कथमिदं दुष्टं दिष्टं व्यरेचयदित्यमू
अपि कथमिमौ दौर्गं मार्गं व्यदध्वहि निर्भयम् ।
अपि कथमहं निद्रामुद्रामनात्तचरीमधा-
मखिलमधुना चष्टे कष्टे स्वसंभवसार्थताम् ॥ २७ ॥

किञ्च ॥ प्राणादप्यसि मे प्रिये, प्रियतरेत्यार्तामभिव्याहरन्
यस्त्वम्मामपुषश्शयाग्रानिहितैर्वन्यैः फलैः कानने ।
सत्वम्मामजहान वेद्मि विहितं कञ्चिच्च मन्तुं प्रभो
तं सम्यक्प्रथमं प्रदर्श्य चलितः स्याश्चेन्न दोषोऽस्ति ते ॥ २८ ॥

यद्वा मय्येवास्तामागः। अयि धार्मिक, साधुभो साधु !

मलिनमिति किमीज्यं भेदनं दर्पणानां
क्षतमिति किमु युक्तं कर्तनं कन्दलीनाम् ।
कलुषमिति किमाहुः पाटनं [illegible]

कुटिलमिति कलत्रोत्सर्जनं तद्वदेव ॥ २९ ॥

किञ्च ॥ यद्वा यातु भवान् कथं तव पदौ स्पन्दं व्यधत्तां पुरः
स्यादेतच्च कथन्नु दैवमपि तत्सोढ्वा स्थितं निर्व्यथम् ।
तस्यैषा हि विधेर्विनोदनविधा वन्हेर्हि दाहः क्रिया
नाथस्यैव गते दयाव्यतिकरे कोवा दयेताद्य मे ॥ ३० ॥

अपिच ॥ नाथेनैव विसृज्यते यदि वधूस्सर्वैश्च सा वर्ज्यते
प्राणत्यागकथा वरा वरतनोर्व्रीडाकराज्जीवनात् ।
मानादाहुरणीयसीमसुकलां मानः प्रतिष्ठाकरो-
ह्यत्यन्तश्चलदुच्चलत्पवनवत्प्राणाः क्षणान्नश्वराः ॥ ३१ ॥

इदञ्च ॥ प्राणानेनान्विरहयितुमप्यंगनैवास्मि शक्ता
दग्धप्राणाः किमशनिमयावेद नाहं यथावत् ।
आगान्नागाननमथ तथा लुब्धकेनाप्यरोधि-
प्यग्रे दृष्टं दलमखिलमप्यत्तमेते न नष्टाः ॥ ३२ ॥

एतच्च ॥ प्रेयानामरणान्तिकं मम गतिस्त्वं वा न पातासि मां
तिष्ठन्त्वद्यतनाः प्रसूमुखजनास्त्वामेव सेवे ततः ।
इत्थं नाथ, निधाय चेतसि मुदैवारण्यमायामहं
त्वञ्चैनामजहाहहा कठिनता पुंसां त्वदेकोद्भवा ॥ ३३ ॥

हन्त! कदाऽपि न विस्रम्भार्हाः पुमांसः । यतः ।

अभिनयति तदेकायत्तचित्तत्वमग्रे
प्रणयति च परोक्षे तद्विरोधैकदीक्षाम् ।
न वचसि कृपणत्वं क्वापि कांतासु यूनो-
गिरमहमिव पुंसोविश्वसन्ती विनष्टा ॥ ३४ ॥

किञ्च ॥ चित्ते तवास्ति मम चित्तमुदाहरेच्छां
संपादयामि झटितीति मुहुर्मुहुर्माम् ।
विश्वास्य सौहृदवशाद्विपिनेऽपि स...
मावासभंग! दधतीं विसृजन्नमास्त्वम् ॥ ३५ ॥

अथवा कृतमेभिरसरजसस्य तवोपालम्भैः । यतः ।

जन्मेदं बहुदुःखभागिति विभो! प्रागेव वैरिंचनी
लेखाऽस्तीव ललाटपट्टालिखिता दौःस्थ्यं तदेवम्मम ।
विज्ञायैव विधेर्विभुत्वमजहाद्विज्ञानशालीविभु-
र्दग्धा यल्लकलेखयैव जगती न क्वापि या जीर्यति ॥ ३६ ॥

तदद्य वरमसुमोक्षः । तदियमस्यामेव तरुशाखायामुद्बध्य कथञ्चिदात्मानमापद्स्तारयै । ( अधोविलोक्य । कामपि लतामवलोक्य । ) अयिलते!

आर्द्रान्तराऽस्यकठिनाऽस्यथितक्षमाऽसि
तापस्वभावरसिकाऽसि सतीनिभाऽसि ।
पृच्छामि तद्वद मम क्व पतिः प्रयातः ? ( सहाञ्जलिबन्धम् । )
याचे न चेद्भव गले मम बन्धरज्जुः ॥ ३७ ॥

( क्षणं विरम्य । ) हहा! त्वमपि कठिनान्तरा संवृत्ता । ज्ञायते " मौनमंगीकृतम्सममम् " इति तवाऽपि मम प्राणविमोक्षएव परमन्तात्पर्यमिति । आस्ताम् । ( लतामाच्छिद्य दलान्यपवर्जयन्ती सकुतुकं सावज्ञम् । ) आवराकि!!

आदौ भासि लते! नितान्तमृदुला तापासहोत्ताम्यसि
पश्चात्काश्चिदुपघ्नवृक्षमयसे धत्से खरत्वं शनैः ।
तस्यांके जनयस्यथापहरसे तज्जीवनाडीकलां
तद्युक्तं कुटिलात्मनस्तव ममोद्बन्धेऽपि साहाय्यकम् ॥ ३८ ॥

( लतां तरुशाखायामभिक्षिप्य निबद्ध्याधि कण्ठमासज्य प्राङ्मुखीभूत्वा साञ्जलि सबाष्पमाकाशे । )

देवाः पश्यत निर्गतिं नृपसुतामुद्बन्धनायोद्यतां
मामेनामजहाद्दयाघनमनाः स्वाम्येव मध्येवनम् ।
आस्तामेतदहं पुनर्भवदशायोगेऽथवा मत्पतिं
यायामव्यथितान्तरं भुवि यथा तद्वानुगृह्णन्तु माम् ॥ ३९ ॥

( यथोक्तं कर्तुम् प्रयतते । )

( नेपथ्ये । ) हाहा!! साहसिनीह काऽपि करुणं किञ्चिद्वदन्ती स्वयं
शाखासक्तलतामतानवलयग्रन्थिमताऽऽकुला ।

उद्बध्यात्र कुतोऽपि मर्तुमहह! स्त्री! स्त्री! हता! हा! हता!!
मा मा मानिनि! संशृणुष्व सुहितानात्मघ्नि मा साहसम्॥ ४० ॥

( प्रविश्य ससम्भ्रमम् सार्थवाहाः सहसोपसृत्य लतां दृढमवलम्बन्ते । )

दमयन्ती — ( ससम्भ्रमम् सास्रं सकरुणं सगद्गदम् । ) आः किमिदम् ।

भद्रा ब्रूत कुतो निरुन्ध दयया पत्यैव मुक्तां वने
प्राणानद्य मुमुक्षुरस्मि बत! मद्दृष्टाऽपि पापी भवेत् ।
भीमस्यैवमिहात्मजा समभवं त्यक्त्वा प्रयाताधुना
सर्वः स्वामधिशेरते विधिदशामत्येति कस्ताञ्जनः ॥ ४१ ॥

प्रसीदत पादेषु वा प्रणिपतेयम् । कृतमस्याः पापीयस्याः परित्राणप्रयतनैः ।

सार्थवाहाः — ( जनान्तिकम् । ) अहो पातिव्रत्यम् । अहो विनयः । अहो रूपमहो वाङ्माधुर्यमहो किमियं भैम्यथवा निषधराजमहिषी दमयन्ती ? तदियमनुपेक्ष्या । तदाश्वास्यैनां साकमेव नेष्यामः । ( प्रकाशम् । )

भद्रे, मा स्म शुचः पतिस्तव नलः कालेन काञ्चिद्दशा-
मातस्त्वामपि मुक्तवानिति वयम्मन्यामहे सांप्रतम् ।
चन्द्रश्चन्द्रिकया विनैव नु भवेत्त्यक्त्वा प्रभां वा रविः
तत्त्वं रक्ष तनुं कथञ्चन पुनस्तं वै पतिं प्राप्स्यसि ॥ ४२ ॥

वयमप्यत्रभवत्याः पुरमेव प्रास्थिप्महि । तदेह्यस्माननुयाहि ।

दमयन्ती — ( स्वगतम् । ) किमेवं सर्वतश्च मे प्राणपरित्यागप्रत्यूहाः प्रणिपतन्ति । ( सविमर्शम् । )

अस्ति किमनुभवशेषः प्रजावगणनां किमाप्य मर्तव्यम् ।
पुनरपि पत्या योगः किं वा दैवस्य संविधिः कोवा ॥ ४३ ॥

( प्रकाशम् । ) भद्राः किम्मह्यमपि दयन्ते भवन्तः ! यतः ।

संपद्भिः प्रथमं ततो नलतया पत्यैव साक्षात्ततः
सौभाग्यैस्तदनन्तरञ्च मनसाप्यावर्जिताऽस्म्यन्ततः ।
दौर्भाग्यप्रभावतास्सरणिं दासैकतामान्तरां

मा माम्भोदयितुं यतध्वमनघाः! पाल्या नु पापीयसी ॥४४॥

तद्विसृज्य मां दूरं यात। (प्रणाममभिनाटयति।)

**सार्थवाहः** — सखायः, भवतु कटकनिवेशनमप्यत्रैवास्माकम्। यतः।

व्योमाम्भोनिधिलंघिनोऽपि तरणेः पादाः प्रचाराक्षमाः
सन्नोड्डीनकुतूहलाश्च निभृतं नीडं विशन्त्यण्डजाः।
दाक्षिण्येन विनाशितोष्मलतया वाताश्च जाड्यस्पृशः
त्यक्त्वैनामपि नः प्रयाणमधुनैवास्माकमप्यार्तये ॥४५॥

तदवतीर्यन्तां संभाराः, तद्वयममूं कथञ्चिदस्मत्कामिनीभिरायोजयिष्यामहे।

(त्रिचतुराः — तथैवेति निष्क्रान्ताः।)

**दमयन्ती** — भद्राः इदमपि तावदवधेयमत्र भवद्भिः। यत्किल

नाथेनैव विसर्जिता च युवतिश्चाहं चिरं चिन्त्यतां
तद्वस्सादरमार्थिनामपि भिनद्म्यस्थानमभ्यर्थनाम्।
मा मा तिष्ठत मास्म कुप्यत दशामन्वग्धियोदेहिनां
याचे वस्तादिदं न कुत्रचिदपि ब्रूध्वं मदीयां गतिम् ॥४६॥

**सार्थवाहः** — (सखेदं सानुकम्पम्।) जाते, मा मैवम्।

वत्से त्वां तनुजेति रक्षितुमिमे सज्जाः पुनर्नः स्त्रियः
सन्त्यत्रैव हि ताभिरेव सततं स्थातुं त्वमर्हस्यहो।
अस्मांश्चिन्तय माऽन्यथा त्वदवनात्पुण्यं यशः प्राप्नुमः
विस्रब्धा भव तूर्णमेव जनकाभ्यर्णञ्च नेष्यामहे ॥४७॥

**दमयन्ती** — (स्वगतम्।) सत्यमिमे सत्यवादिनएव यद्रूपमेवैषामिङ्गितमाचष्टे। (विमृश्य।) किमावुकसदनमनुप्राप्यापि दुर्भगायाः! (प्रकाशम्।) सत्यमपापमेव तत्रभवन्तोनयन्ति। तथाप्यवज्ञामन्तरेण किमस्ति दुर्भगायाः पितृसदने।

**सार्थवाहः** — वत्से, यत्सत्यमवज्ञापि जातुचित्। तथापि ननु स्वभवनस्थया स्वजनैः स्वनायकागमनोपायः कर्तुमलम्।

**दमयन्ती** — (स्वगतम्।) पथ्यमिदमपि। किं वाऽधुनैव मरणेन। आन्वि-

प्यापि यदि दुर्लभः प्रियः परमिदमस्त्येव । (प्रकाशम् ।) भवतु शरणमत्र-भवन्तः । जातेयमनुसरामि वः । (उद्बन्धनलतामुत्सार्य सप्रश्रयमनुसरति ।)

**सार्थवाहाः** — वत्से, मा भैषीरनुयाहि नः प्रविशेम कटकम् ।

(स्तोकमन्तरं परिक्रामन्ति ।)

(नेपथ्ये । कलकलः ।) अब्रह्मण्यम् ! अविध ! हताः स्मः !!

पद्भिर्मृद्नन्ननेकान्पथि पथि शयितान्कांश्चिदुद्दण्डशुण्डा-
दण्डाग्रेणैव चण्डं प्रसभमुभयतः खण्डयन्भिण्डखण्डम् ।
कल्पांताभ्रप्रकाशः श्रुतिपुटचिपिटीकारिघींकारघोरः
क्रुद्धः कोऽप्यत्र वन्यः कलयति कटकं विह्वलं व्यालहस्ती ॥ ४८ ॥

**सार्थवाहाः** — (निशम्य ससम्भ्रमम् ।) जाते, त्वमिहैवास्व । कोऽपि कटकस्यैव करिणउपप्लवः । (इति त्वरितपदन्निष्क्रान्ताः ।)

**दमयन्ती** — (सखेदम्) किमुपकारिणामप्युपनतम् । फलमिदं पापायाःप्रियचिकीर्षायाः । (पुनर्नेपथ्ये ।)

दग्धे, त्वामवितुमस्मास्वागतेषु नःपुत्रकलत्रादयोऽपि हताः । हा धिक् गच्छ पापे यथायथम् । दुर्भगायाः परित्राणमपि पाप्मने महते । तद्रक्ष रक्षात्मानं वा । ननु ततएवागच्छति गन्धहस्ती ।

**दमयन्ती** — भद्राः, सत्यमाहुर्भवन्तः पापायास्त्राणमेव पापायेति । ननु पूर्वमेवाहमुदाहार्षमेवम् । (निशम्य ससाध्वससम्भ्रमम् ।) हा धिगितएवाभिवर्तते मत्तेभोऽपि । तत्कथमपि धावामि । (सवैक्लव्यम् धावन्त्येव सास्त्रम् ।)

यदि वन्यगजान्मुच्ये कथमपि पत्युर्गवेषणे प्रयते ।
न यदि प्रथममनीषितमस्थिरधारा हि देहिनां नियतिः ॥ ४९ ॥

(इति रोदं रोदं श्वासं श्वासं धावं धावं पातं पातं निष्क्रान्ता ।)

इति श्रीभट्टश्रीपण्डितनारायणसुदर्शनीये
कलिविधूननाटके
करुणधारा नाम पञ्चमोऽङ्कः — शिवाभ्यां नमः

---

## अथ षष्ठोंकः

( ततः प्रविशति जीवलवार्ष्णेयाभ्यां सहैव समुत्स्वप्रायमानोबाहुकः । )

**बाहुकः** — हा प्रिये, हा पतिच्छन्दानुवर्तिनि, हा सततप्रसन्नमुखि, हा चारुहासिनि, हा सर्वांगसुन्दरि, हा विदर्भजे, क्वासि, क्व गतासि, क्व सञ्चरसि, किमवस्थाऽसि, किमाकाराऽसि, किं चेष्टसे, किं भ्राम्यसि, किमुन्माद्यसि, किन्निपत्य क्वचन रोदिषि, किं क्वचिन्मूर्छिताऽसि, किं तत्रैव मदागमं प्रतिपालयन्ती जोषमासि, किं विलपसि, किमवसानोपायमुत्पश्यसि, हा हतोऽस्मि, हा अनाथोऽस्मि, हा जीवन्नपि मृतोऽस्मि प्रिये किमथवा तपस्यसि, किमुत शुष्यसि, किमटवीमृगैर्बाध्यसे; किं नु मां शपसि, सत्यमस्मि गर्हामर्हामि नार्हणाम् । धिङ्मामशरणतरुणीविसर्जिनं, यद्वा विधिरयमावयोः, कृतमयुतशः परिदेवनेन ।

( सफूत्कारं निश्वसिति । )

**जीवलः** — ( जनान्तिकं सविस्मयम् । ) सखे वार्ष्णेय, अपि शृणोषि बाहुकविलपितम् ।

**वार्ष्णेयः** — ( जनान्तिकम् । ) नन्विदमाकर्ण्यते; कामप्यनुचिन्त्य किलायं विलपति, किमेनमपि काचित्कामयिता !

**जीवलः** — ( जनान्तिकम् । ) किमुच्यते, नन्वस्तीदृशेष्वपि सकामाः कामिन्यः ।

**वार्ष्णेयः** — ( सहासम् । ) किं वा, न जाने कथमिवास्मिन्ननुरज्यति नाम रमणी । यदस्य हि ।

गात्रं बर्बरकाण्डकर्कशतमं कान्तिर्दृगंधंकरी
कुब्जाश्चावयवाः कचाश्च कुटिलाभूदाररोमोपमाः ।
दृष्टिर्भीतिकरभ्रमिश्च गवलह्रादस्स्वरोघर्घरो-
गन्धश्च व्रणपूयपूतिरासितोनिर्णेजनाङ्गःपटः ॥ १ ॥

**बाहुकः** — ( सास्रम् । ) हा प्रिये दमयन्ति,

हा ! नाथेति रटन्मुखी किमु तरोरालिंगनेन क्षता
किं वा क्षुद्रकिरातहस्तपतिता प्राप्ताऽसि मर्छां शुचा ।

किं वा त्वां वृकशावकाःखरनखैः क्रव्याशया दारय-
न्त्याहोस्वित्स्वयमेव पावकमनुप्राप्ताऽसि निर्वेदतः ॥ २ ॥

हा हा हतोऽस्मि, हा अशरणोऽस्मि । ( इति प्रलपन्नेव शयनाभिपतति । )

**जीवलः** —सखे, पश्यस्त्येनमविचेतिततया निपतितम् ।

**वार्ष्णेयः** —( सशंकम् । ) किमयमाह दमयन्तीति ? किमेषएव नः स्वामी ; नन्वस्य रूपमेवाचष्टे यदसावसइति । सकिल ।

आकर्णजाहद्वगनिम्नविशालवक्षाः
आजानुबाहुरतितुंगकपोलघोणः ।
आप्यानपार्ष्णिरपरैरनुमेयजत्रुः
आलक्षितस्सहि समस्तशुभांगराशिः ॥ ३ ॥

अपिच ॥ समस्समांगस्समवृत्तशीर्षो
स्थिरप्रकोष्ठः स्थिरमुष्टिवक्षाः ।
सिंहेभशार्दूलमहोक्षगामी
सत्वोपपन्नस्सहि सार्वभौमः ॥ ४ ॥

किञ्च ॥ भ्रुवोर्दीर्घः खर्वः कररुहि विशालश्च निटिले
कचे सान्द्रस्साक्ष्णि प्रथिमभृद्दणीयांस्तनुरुहि ।
शुचिर्दन्ते रक्तोरदनवसने जानुनि समो-
ऽसमोबाह्वोस्सोऽयं सकलजगतीमण्डनमणिः ॥ ५ ॥

इतरच्च ॥ हस्तस्थचक्रसरसीरुहशंखरेखः
पादाब्जलक्ष्यहलशंबधनुर्झषांकः ।
ऊर्णाविशेषपरिमण्डितफालपट्टः
साम्राज्यलक्षणनिधिस्सइहैकएव ॥ ६ ॥

तत्सर्वथायं न नः प्रभुरयमपरः कोऽपि कुक्षिंभरिः । कति न संति समानास्त्रियः ।

**जीवलः** —आमाम् । अस्तीव दमयन्त्याख्या तदितराऽपि काऽपि तरुणी । पृच्छ्यतामयम् ।

**बाहुकः** — (तलताडनमभिनीय ससंभ्रमं प्रबुध्य स्वगतम् ।) किमेवमचेतितः किञ्चिदिव प्रालपम् । शयनाच्च न्यपप्तम् । आस्तामिदमपि दुरुक्तिनिशमनादनयोरपि मयि शंका प्रादुःष्यात् । कथमिव तामपनयामि । (विमृश्यसधैर्यम् ।) भवत्वनयोरपलपनं कियदिव मे । पृच्छतां तौ । (यथापुरमात्मशय्यामधिरुह्य शयनमभिनयति ।)

**उभौ** — (सहासम् ।) सखे बाहुक, किं काञ्चिदिव निध्याय किञ्चिदिव विलप्य शयनादपि न्यपप्तः ! अप्यस्ति तेऽपि कामिनी, किं माऽपि दमयन्त्याख्या । सर्वं नौ निवेदय ।

**बाहुकः** — (स्वगतम् ।) हहा किमहं नाम च व्यशदयम् । भवतु किन्तत (प्रकाशम् ।) सखायौ, सर्वथाऽस्मि ब्रह्मचर्ये ॥ पश्यत ॥

मामेवमाकृतिमुदीक्ष्य नु कामयेत
कान्ता तदेतदितरैरविभाव्यमेव ।
तच्चाविमृश्य कथमत्र सहासमेनं
अप्राष्टमस्ति नु तवापि कुटुम्बिनीति ॥७॥

अपितु ॥ कस्याप्यमूनि परिदेवकथाक्षराणि
मार्गे क्वचित्किल मया विपिने श्रुतानि ।
तानि स्मरन् किल कुतोऽप्यशयिष्यहं ह्यः
स्वप्नेऽपि तत्प्रलपितं सकलं यथावत् ॥८॥

**जीवलः** — (अपवार्य जनान्तिकम् ।) सखे, अप्येवमेव स्यात् ?

**वार्ष्णेयः** — (तथैव ।) कस्संशयः ? पश्य ।

त्रिभुवनललनाललामभूतं
नलनयनं क्व दमानुजं तदोजः ।
क्व च कुणिरयमस्य च क्व मात्रा
दमपि वाचि निधाय वक्तुमस्याः ॥९॥

सत्यमेव यथा श्रुतमालपनमिति ।( प्रकाशम् । ) सखे, क्व तवेदं श्रवणगोचरतामगात् ।

**बाहुकः** — वयस्य, न जाने क्वेति निश्चयचम् । किन्तूत्तरारण्यएव क्वचित् ।

**वार्ष्णेयः** — (सशोकम् ।) सत्यमेषमम स्वामिनएव प्रलापः । यदश्रौषमुत्तरारण्यमेव प्रविष्टः प्रभुरिति ।

**जीवलः** — सखे, ननूक्तिरियमालपितुरामुक्तजानितां पिशुनयात । ननु नःप्रभुस्स्वजानिरेव प्रोषितः ।

**वार्ष्णेयः** — आमाम् । न जाने कुतस्तयाविरहित इति । प्रातिकूल्यमिव पश्चात्सतीमपि परित्यक्तवानिति मन्ये ।

(सनिश्वासमाकाशे बाहूप्रसार्य साश्रुगद्गदम् ।)

आयुष्मन्, । कम्पे मनागपि रथस्य शनैश्शनैरि-
त्याख्यास्यसे पथि बहु व्यथितः स्मरामि ।
तादृकत्वमद्य कृतरिक्तपदप्रचारः
उत्खातिनीषु धरणीषु कथन्नु यासि ॥ १० ॥

अपिच ॥ छत्रग्राहिणिकाप्रमादवशतश्शोणे मनागातपा-
द्गण्डे लोलदृशः पुरा वितनुषे शोणां दृशं सर्वतः ।
सत्वं हन्त! कठोरसूरकिरणक्रान्तां स्त्रियन्तां जह-
न्नाहार्यैः पुरुषायुषं हतविधेरित्थंविधेस्त्वामनु ॥ ११ ॥

किञ्च ॥ यत्र प्रस्नुतधेनुदुग्धलहरीलीलाः कटाक्षांकुराः
स्वामिस्ते निपतेयुरत्र नियतं भाग्यामृतैर्भूयते ।
तान्येवाद्य विलोकितान्यविकलं वैयर्थ्यमाबिभ्रति
क प्रेंखन्ति शरत्सरद्घनघटाप्रावारफक्कीसमम् ॥ १२ ॥

(इति सविषादं मूर्च्छति ।)

**बाहुकः** — (आत्मगतम् ।) हन्तेयं दुर्दशा । अन्यथा ।

क्वापि प्रिया क्वचिदपत्यमयं क्वचिच्च
क्वाप्यात्मबन्धुनिवहाः क्वचिदाप्तवर्गाः ।
क्वापीदृशोभटजनाः क्वचिदात्मगोत्रे-

त्येवं कयाऽथ विधुरः क्रियते नलोऽसौ ॥ १३ ॥

न केवलमहमात्मनः परमात्मीयानामपि क्लेशाय समजनिषि । यतः ।

मद्दुर्दशां मनसि संप्रकलय्य मत्काः
स्वस्वास्थितावपि विमुक्तसुखानुरागाः ।
सीदन्ति हन्त! शतशस्स्मृतपूर्ववृत्ताः
माधोर्विपत्तिरखिलैरनुशोच्यते हि ॥ १४ ॥

स्मरणमभिनीय । स्वगतम् । ) हा प्रिये । हा विदर्भतनये !

अधिवनमतिमात्रक्रन्दितोच्छूनगण्डा
नयनजलझरीभिर्भिन्नभूषाश्मकान्तिः ।
वियति विततबाहुस्सम्यगुत्तानितास्या
चरितमिति मदीयं क्वाद्य शम्भुं ब्रवीषि ॥ १५ ॥

अथवा ॥ अधिविदर्भमुदीक्ष्य तनूभुवौ
किमुपगूह्य निपत्य नु रोदिषि ।
अयि चतुर्षु सुरेषु समागते-
ष्ववृणुथाः किमिहैनमकिञ्चनम् ॥ १६ ॥

( अश्रुपातमभिनीय ससाध्वसम् । ) जागृतः किल जीवलवार्ष्णेयौ ; तत्किमास्म रोदिमि ; नन्विदमपनीतशंकयोः पुनरपि शंकाजनकम् । ( विमृश्य । ) अथ वाऽस्त्येवास्याप्यपलपनमार्गोयद्वार्ष्णेयानुशोचनन्नाम । ( प्रकाशम् । ) सखे जीवल किमतिमात्रमनुशोचति वयस्यः स्वामिनं तदेनमाश्वासयावस्तावत

**जीवलः**—स्वामिनमनुशोचत्येषः, सकिल सार्वभौमः पदभ्रष्टः परैरपि दुरधिगमां कामपि दशामनुभवति । तदिदममुष्य तत्कार्तज्ञ्यम् ।

**बाहुकः**— ( आत्मगतम् । ) सत्यमविदितैवास्य दशा । अप्यास्त सार्वभौमताप्यस्य । तया हि स्वप्नसाम्राज्यायितम् । ( प्रकाशम् । ) किमनुशोचनेन । दुर्वारमसुमतामलिकलेखावृन्दम् ।

**उभौ**—सखे, समाश्वसिहि । ( पटाञ्चलेन वीजयन्तौ । ) कृतमतीतदुर्गतानुशोचनया ।

वार्ष्णेयः — ( संज्ञां लब्ध्वा । ) सखायौ, आस्तामस्मत्स्वामी । निसर्ग एव हि सहिष्णुता स्थिराभुजाम् । कथन्नाम सुकुमारा स्वामिनी दशामिमामनुभवितुं प्रभविष्यति ।

यस्याः खलु ॥ समौ गुल्फौ पादद्वितयमसिरालञ्च मसृणं
क्रमाज्जंघे वृत्ते दुरधिगमुखं जानुयुगलम् ।
निमज्जत्पर्वाणौ विनतशिखरौ बाहुविटपौ
तनुर्वृत्ता ग्रीवा तनुरपि धरायामणिरिव ॥ १७ ॥

अपिच ॥ न स्थूलं न कृशं न खर्वमधिकं नोच्चं वपुर्नासमं
वेणी नो कपिलच्छविर्न भिदुरा स्निग्धा सुगंधिः पुनः ।
कृष्णारक्तसितात्रिभागमधुरे धीरे दृशौ मन्थरे
स्निग्धश्याममसंगतञ्च कुटिलं युग्मं भ्रुवोस्सुभ्रुवः ॥ १८ ॥

किञ्च ॥ कलशयवकुशेशयांडजांकाः
बहुधनधान्यसुतप्रदाश्च रेखाः ।
करतलमनु भान्ति सा हि काचित्
त्रिभुवनयौवतजैत्रवैजयन्ती ॥ १९ ॥

कथमियमप्यधिवनमिति मेऽपि खेदः । ( हा धिगिति पुनर्मूर्च्छति । )

बाहुकः — ( सास्रम् स्वगतम् । ) आः किमियदेव तस्यास्सौकुमार्यम् ।
चक्राभं सकुकुन्दरं घनघनं मग्नेभकुम्भोपमं
नैतम्बं चतुरस्रवत्तटमहो किं स्त्रैणसाधारणम् ।
वृत्तप्रान्तविभक्तरागमधरं हित्वासहोरू स्तना-
वच्छाच्छशिखरी च तद्वदचयः क्वान्यत्र संति स्त्रियाः ॥ २० ॥

अपिच ॥ कर्णोत्पलं नयनमेव विलासमाला
बाहैव दर्पणमपि स्तनयुग्ममेव ।
हारोऽपि मन्दहसितच्छविरेव वासो-
ऽप्यंगप्रभैव वपुषैव विभूषिता सा ॥ २१ ॥

किञ्च ॥ वीटीसेवनमोष्ठरागहतये पुष्णाति यत्क्षणिकां

लाक्षारञ्जनमंघ्रितोदगकृते यत्स्फारभारायते ।
दृग्दोषाय विलासपत्रमकरी रत्नश्रियोर्गण्डयोः
अंकायैव तमालकञ्च सुदृशोवक्त्रामृतांशोः पुनः ॥ २२ ॥

इतरञ्च ॥ उपमानस्योपमानं भूपणानाञ्च भूषणम् ।
मंगलं मंगलानाञ्च प्रिया मे श्रीः श्रियामपि ॥ २३ ॥

एतच्च ॥ प्राणादप्यांतरः प्राणोहृदयाद्धृदयं परम् ।
दैवादपि महद्दैवं दुर्भगस्यास्य सा वधूः ॥ २४ ॥

तादृशमप्यधिवनमावर्ज्य सावित्रमृतुपर्णमाश्रित्य प्राणिमि । हा धिगिमानशनिमयानसून् । अथवाऽस्ति नु वाऽनया पुनस्समागमः । यदिमे न निर्गच्छन्ति । (सविमर्शम् ।) कथमिदं यत्किल ।

मुक्ता क्वापि वने वधूस्सहभुवे सर्वाश्च दत्ताः श्रियः
सा च स्वं सदनं जगाम नु शुचा मूर्च्छां परां प्राप नु ।
यद्वा न क्षतमूर्तिरेव किमिति प्रोत्सृज्य यातं पतिं
विस्रब्धं श्रायिता पुनः कथमहो योगस्ततोऽप्यावयोः ॥ २५ ॥

(इति सबाष्पमवनताननं चिन्तान्नाटयति ।)

(नेपथ्ये ।) " भद्र मा स्म शुचः । वनात्प्रतिनिवृत्ता भद्रबाहोरशालामधिवसति नाम सा । तद्भद्रमेव तव त्वदीयानाञ्च । ,,

**बाहुकः** — (निशम्य स्वगतम् ।) किमुपश्रुतिरपि तस्यास्सुखेन क्वचन स्थानमुभयेषाञ्च भद्रमासूचयति । तदस्तीव नियतमनुभाव्यः कियानिव नः कर्मराशिः । भवतु न मे पुनर्योगे स्वप्नचिन्ताऽपि । (प्रकाशम् ।) सखे वार्ष्णेय समाश्वासिहि । अलमेतावतैव ।

**वार्ष्णेयः** — (संज्ञां लब्ध्वा । निशम्य ।) उपश्रुतिरप्यागामि भद्रमेव सूचयत्यनयोः ।

**जीवलः** — सत्यम् । आस्तामिदम् विभाता हि विभावरी जानीहि कस्यायं स्वरसंयोगइति ।

**वार्ष्णेयः** — (विमृश्य ।) ननु ह्यः काऽपि घोटी वनान्तरं मद्भुता । तत्र-

वृत्तिमधिकृत्य कमपि मान्दुरिकं कोऽपि समाश्वासयति न किमप्यन्यत् ।
( नेपथ्ये । ) मान्दुरिकाः , आहूयतां सहैव नव्यसारथिना बाहुकः । यदाखेटमिच्छति महाराजः ।

जीवलः — सखायौ , अथ शृणुथः सन्देशममात्यसुबुद्धेः !

वार्ष्णेयः — अथ किं । तत्रातिष्ठावहै यावत् । ( इति प्रस्थितः । )

बाहुकः — ( आत्मगतम् । ) का गतिर्मयापि सह प्रस्थातव्यम् ।

अहह मम वियुक्तां स्मर्तुमप्यात्मकान्तां
क्षणमपि न विरामस्सारथिशिक्षानियोगात् ।
युगपदिह परेषां सेवनन्नाम कश्चि-
त्सकलसुखविसर्गोपायमाहुर्महान्तः ॥ २६ ॥

( प्रकाशम् । ) सखे वार्ष्णेय साधयावस्तावत् । ( इति सर्वे निष्क्रान्ताः । )

इति श्रीभट्टश्रीपण्डितनारायणसुदर्शनीये
कलिविधूननाटके छलन्नाम
षष्ठोंकः शिवाभ्यान्नमः



अथ सप्तमोंकः

( ततः प्रविशति सैरन्ध्र्या सह सुनन्दा । )

**सुनन्दा** —— [क] हंजे किं मालाओ आणीदाओ । कई केत्तिआ अ । किं पुप्फा किंपमाणा किंरुव्वा अ । किं सम्म गुंफिदा जेव्व ।

**सैरंध्री** —— [ख] भट्टिदारिए, आणीदं सदं मालाणं । तासुं मल्लिआ णोमालिआ जाईओ अदिमुत्तआ अ होन्ति । सव्वा वि व्वामचउठ्ठअमेत्ता । अविअ अण्णाणं रुव्वाइं पि कवअकंचुलीकिरीडकडअकेऊरणेउरवणमालद्धरुअकन्दुअकोसेआदिसरिच्छाइं ।

**सुनन्दा** —— [ग] किं दिण्णाइं इमाइं अंबाए दामाइं ।

**सैरंध्री** —— [घ] अहइं । भट्टिदारिए अध एथ्थ को विसेसो जं एद्दहाइं कुसुमाइं आणीदाइं ।

**सुनन्दा** —— [ङ] णं पुण्णाहोत्ति बम्मणावि बम्मघोसं कुणन्ता अवो आअच्छन्ति ।

**सैरन्ध्री** —— [च] किं एत्थ आअच्छन्ति । ( सकुतुकमवोविलोकयति । )

(ततः प्रविशति सहैव सौवस्तिकैस्सुदेवः । )

**सुदेवः** —— ( स्वगतम् । ) स्वस्त्ययनपाठिभिरमीभिरवनिसुरैरेवाहमप्यार्थैराडवकल्पमन्तःपुरमपि प्रविश्य विचेतव्यं विचिनुयाम् । ( प्रकाशम् । स्वस्त्ययनं पठन्नेव परिक्रामति । )

---

[क] हञ्जे, किम्मालाआनीताः कति कियत्यश्च किंपुष्पाः किंप्रमाणाः किंरूपाश्च किं सम्यग्गुंफिता एव ।

[ख] भर्तृदारिके, आनीतं शतम्मालानां । तासु मल्लिका नवमालिकाजातयोऽतिमुक्ताश्च भवन्ति । सर्वाअपि व्यामचतुष्टयमात्राः । अपिचान्यासां रूपाण्यपि कवचकञ्चुलीकिरीटकटककेयूरनूपुरवनमालाधोरुककन्दुककौशेयादिसदृशि ।

[ग] किं दत्तानीमान्यम्बायै दामानि ।

[घ] अथकिं भर्तृदारिके, अथात्र कोविशेषः । यदेतावन्ति कुसुमान्यानीतानि ।

[ङ] ननु पुण्याहइति ब्राह्मणा अपि ब्रह्मघोषं कुर्वन्तोऽत्रआगच्छन्ति ।

[च] किमत्रागच्छन्ति ।

उभे — [छ] ण णवर णेत्ताणं वेअ आणन्दआ इमे अग्गजाइणो, अवि-अ सोत्ताणं वि सोत्थिवाअणेहिं सन्तोसआ। (सकुतुकमीक्षते।)

सुदेवः — (उभे निर्वर्ण्य सवितर्कमात्मगतं सैरन्ध्रीमुद्दिश्य।) किमनयोरन्यत-रेयमालोकेनैव परिचितपूर्वतामिव व्यनक्ति। या किल ॥

पारेनिटालतटमुद्ग्रथितैकवेणी
सामीकृतं चिरतनं वसनं वसाना।
उद्धूलिताच्छभसिता करसत्करण्डा
सैरंध्रिकेव सरुजेव च भाति केयम् ॥ १ ॥ (निपुणं निर्वर्ण्य।)

अये! प्रतारितोऽस्मि भूमिकया। नन्वियमेव दर्शनीया (सहर्षोल्लासं पश्यन्)

अये दृष्टा सैषा त्रिभुवनवधूमण्डनमहा-
मणिर्भैमी हैमी प्रतिकृतिरिवासीत्स्वभुवि या।
इहैवं क्षामांगी परिवसितपाटच्चरलवा
धृतग्लानिस्साक्षादिव करुणमूर्तिर्विहरति ॥ २ ॥

अपिच ॥ दर्शस्थेव विधोः कला तपभरात्तन्वीव कल्लोलिनी
नीहारग्लपिताऽब्जिनीव जलदैरुद्धा दिनश्रीरिव।
दृष्टैवं विधुनोति मामपि कथं सोढा पुनस्तत्पिता
सत्यं प्रेक्ष्य सुतामिमां प्रियसुता माता तनुं त्यक्ष्यति ॥ ३ ॥

अवद्यएव सपापीयान् परमेष्ठी । यतः।

सदृशजम्पतिसंगतिसंभवां
मुदमसासहिरंबुरुहासनः।
प्रणयभंगभृतौ व्यदधादमू
गुणसमग्रधृतेस्सहि शात्रवः ॥ ४ ॥

हा धिक् ॥ भिन्नेव जन्मान्तरसंगतेव
दुष्प्रत्यभिज्ञा समभूदियं सा।

---

[छ] न केवलं नेत्रयोरेवानन्ददाइमेऽग्रजातयः, अपिच श्रोत्रयोरपि स्वस्तिवाचनैस्सन्तोषकाः।

भर्तुर्वियोगेन हिमागमेन
पलाशशून्येव पटीरवल्ली ॥ ९ ॥

हन्त! कथमप्येषसिद्धसाध्योऽस्मि। न प्रत्यभिजानीतइवासौ माम् । कथमिदम्। (सविलंबं परिक्रामति।)

ब्राह्मणाः — ब्रह्म घोषयन्तएव सजवमवरोधप्रवेशनाटयन्तो निष्क्रान्ताः।)

**सुनन्दा** — [ज] हञ्जे गच्छह्मि महल्लअम्। उवअरिदव्वा खु घरं आअदा सोत्थिवाअणिआ। (इति सत्वरं निष्क्रान्ता।)

**सैरन्ध्री** — (सुदेवमवलोक्य।) [झ] को एसो करकलिदसिणिद्धवेणुदण्डसमसमागहीदहरिदकुसमुट्ठी ओलंबिअधलधलन्तदुव्वण्णकरओ तिज्जवेल्लिदजण्णसुत्तपरिकम्मिदवक्खत्थलो अग्गिहोत्थभसिदभासिदभालदेसो आआरो विअ अवणिसुरप्पहाओ मं पि उणोउणो समहरिसविसाअबाहपूरभरिदाहिं अच्छीहिं आपिवन्तो विअ णिक्कन्तेसुं वि बम्मणेसुं कुदो वि इदो वेअ विलंबेइ। (निपुणं निरूप्य। स्वगतम्।) अम्हहे! एसो खु आवुअपूजाघरुज्झाओ अज्जसुदेओ। (सविषादम् सलज्जम्।)
कहं से पुरदो एव्वंविहा अप्पाणं पअडेमि। वरं इमादु कहंवि ओसप्पणं। आदु कहं एसो मुणिस्सइ मं। णं अहं भिण्णभूमिअह्मि। (विमृश्य।) से विलोअणसेल्लिं दिट्ठूण किं पि मुणिदं त्ति तक्केमि। कहं उण से पुरट्ठाणे वि पारइस्सं। (अन्यतः परिवर्तते।)

**सुदेवः** — (आत्मगतम्।) अये इयमपि मामवगम्यैव न जानतीवाभि

---

[ज] हञ्जे, गच्छाम्यन्तःपुरमुपचरितव्याः खलु गृहमागताः स्वस्तिवाचनिकाः।

[झ] कएरकरकलितस्निग्धवेणुदण्डसमसमागृहीतहरितकुशमुष्टिरवलंबितधलधलद्दुर्णकरकास्तिर्यग्वेल्लितयज्ञसूत्रपरिकर्मितवक्षःस्थलोऽग्निहोत्रभासितभासितफालदेशआकारवानिवावनिसुरप्रभावोमामपि पुनःपुनः समहर्षविषादबाष्पपूरभरिताभ्यामक्षिभ्यामापिबन्निव निष्क्रान्तेष्वपि ब्राह्मणेषु कुतोऽपीतएव विलंबते। अहो एषखल्वातुकपूजागृहोपाध्यायआर्यसुदेवः। कथमस्य पुरतएवंविधात्मानं प्रकटयामि। वरमस्मात्कथमप्यपसर्पणम्। अथवा कथमेषज्ञास्यति मां नन्वहं भिन्नभूमिकाऽस्मि। अस्य विलोकनशैलीं दृष्ट्वा किमपि ज्ञातमिति तर्कयामि। कथं पुनरस्य पुरःस्थानेऽपि पारयिष्यामि।

नयन्त्यन्यतो दत्तदृष्टिरास्ते । स्थाने हि तत् । यतः ।

परिचितसन्निधिरेव प्रभवति दुःखाय नैव दौर्भाग्यम् ।
अनुशोचयितुरभावे भवति विषादोऽपि सम्मदप्रायः ॥ ६ ॥

अपिच ॥ विधिहतविभवभराणामपरिचितस्थानमेव हर्षाय ।
विगलितमयूखमालोविशति विवस्वांश्च वाराशिम् ॥ ७ ॥

धिक् सर्वथा दुर्विधानि दुर्दैवविलसितानि । यतः ।

पद्मिन्याः परिशोषणं छविमतश्छायाग्रहाच्छादनं
शीतांशोरसकृत्क्षयस्सुरपतेः क्रूरासुरोल्लंघनम् ।
भूलक्ष्म्योरपि बाहुपत्न्यवचनं स्वर्योषितां वन्ध्यता
गायत्र्या अपि शापइत्यनवधिस्सोयं विधिर्दुर्विधेः ॥ ८ ॥

आस्तामिदं । कथञ्चिदेनामुपसृत्य विश्वास्य समाश्वास्य च समीहितसाधने प्रयते । (शनैरुपसृत्य । हस्तमुद्यम्य । सहर्षखेदं नीचैः । ) स्वस्ति भैम्यै ।

(आशास्ति । )

**सैरन्ध्री** — (ससाध्वसलज्जाविशादम् । ) कथमियमसंशयमवगताऽस्मि अथ किमेनं ब्रूयाम् ।

यातः क्व ते पतिरयं विरहः कुतो वां
सैरन्ध्रिकेव महिषी किमिह त्वमास्से ।
मामभ्युदीक्ष्य किमपैषि पराङ्मुखीति
पृच्छेदयं यदि ततः किमिहोत्तरं मे ॥ ९ ॥

अथवा किमितः । नन्वभ्यन्तरेष्वाभिषंगोद्घाटनमपि कल्पते प्रतिक्रियायै । (प्रकाशम् । संस्कृतमाश्रित्य । सप्रश्रयम् । ) भगवन्ननुगृहीताऽस्मि । अप्रत्यभिज्ञाय किञ्चिदिवापराद्धममुया । क्षम्यतां क्षमाभरणाएव क्षमासुराः । (सबाष्पम् क्षितितलनिहितजानुकरकमलौ प्रणमति । )

**सुदेवः** — भद्रे । उत्तिष्ठोत्तिष्ठ । कोनामायमपराधः । यतः ।

जानन्त्यत्र जनाधिनाथजनतामाबालवृद्धं जनाः
नैषा तानवगच्छतीति भुवने विष्वग्गतेतद्वचः ।

यद्वाऽऽस्तामवमानना‌त्र सुतरामाहोनु सम्मानना
दिष्टया हि त्वमदृश्यथाः किमितरद्येनेत्यसौ मुह्यति ॥ १० ॥
नन्विदं । अन्धस्याक्षमकिञ्चनस्य च निधिर्वर्षश्च मालक्षितेः
रुग्णस्यापि महौषधं भवगदक्लिष्टस्य मुक्तिः परा ।
ध्वान्तस्थस्य रविप्रभा गहनगस्याध्वा महान्यन्मया
दृष्टाऽस्यप्रतिपत्तिमूढमनसा कालाद्बहोर्भ्राम्यता ॥ ११ ॥
यद्वा ॥ त्वत्तातपिण्डकलितोदरपूरणाना-
मस्माकमत्यभिजनव्यवहारभाजाम् ।
वत्से, ऽवमाननमपि क्षरति त्वदात्त-
मामोदलक्षणसुधालहरीष्टषन्ति ॥ १२ ॥

**सैरन्ध्री** — वात्सल्यमेवेत्थं मुखरयति भगवन्तम् (स्तंभदत्तदेहभारातिष्ठति।)

**सुदेवः** — वत्से, क्षम्यतामीषादिव सन्धुक्ष्यते ते शोकाग्निः यदवाजिगमिषु तव त्वत्पतेश्च चरितमतित्वरयतिनाम मम वाचं मनः । तत्कथ्यतां ।

**सैरन्ध्री** — (सनिश्वासम्। ) भगवन् ,किं पुण्यवतामपुण्योदन्तश्रवणेन ।

**सुदेवः** — अप्यस्मादप्यस्ति किमपि पवित्रतरश्चरितम् । तदुच्यतामनवशेषम् ।

**सैरन्ध्री** — तर्हि कथनीयमभाग्यायाश्चरितं श्रूयताम् । यत्किल ।

आजह्रे वसनं प्रयाणसमये प्रक्रान्तएव प्रभोः
मायावी विहगस्तथैकवसनच्छन्नावयावाटवीम् ।
अत्वाप्स्वाधिवनं (अर्धोक्ते। स्मरणमभिनीय। सबाष्पमाकाशे। )

हा दयित, हा दमयन्ति, हा दैव (इति मूर्च्छति। )

**सुदेवः** — भद्रे, मोत्ताम्य, समाश्वसिहि, अतीतानुकथनमेवहीदम्

(अन्तरीयेण वीजयति। )

**सैरन्ध्री** — (संज्ञां लब्ध्वा। सखेदम्। ) अथावशेषमपि कथनीयम् ।

**सुदेवः** — नन्वितएव कथनीयं कथ्यतान्तदपि कथमपि । अनतिचिरादेव भद्रन्ते ।

**सैरन्ध्री** — भगवन्नास्तामियमाशीरन्वर्था । तद्वदाम्येव कथमपि ।

समां जहदगात् (इत्यर्धोक्ते पुनस्सबाष्पम् ।)

भगवन्, किमतिपापाया अपि चरितमाकर्ण्यते । न खलु स्वरसनाऽपि वक्तुमिच्छति मे चरितम् ।

**सुदेवः** — वत्से, श्रुते सकले कथमपि तत्प्रतिक्रियायां प्रवर्तिष्यामह इति प्रागेव निगदितेऽपि कुत इतीव तातप्यसे । ब्रूह्यवशिष्टमपि ।

**सैरन्ध्री** — भगवन्नप्रतीकाराह्यकृतसुकृतानामापदइति वच्मि । श्रूयतां परमपि । कृच्छ्रैर्विचित्याप्यमुं नोलब्ध्वा (अर्धोक्ते ।)

हा मे दशा । (इति मूर्च्छति ।)

**सुदेवः** — (आत्मगतम् ।) स्थाने हीदं यदियं स्मृत्याऽपि व्यथत इति ! यतः । कष्टानि स्मृतिकालएव सुतरां दुन्वन्ति देहिव्रजं

तानीत्थं न तथाऽनुभूतिसमये शून्यत्वतश्चेतसः ।

तस्मादेव विदर्भजा स्मृतपुरावृत्ता वियुक्ताऽधुना-

ऽप्यन्यत्र क्वचन स्थिता गतधृतिर्गाढं समुत्ताम्यति ॥ १४ ॥

अपिच संस्तुतसन्निधिरपि स्वातीवनवृष्टिश्शोकशुक्तेः । (प्रकाशम् ।) वत्से, ततस्ततः किमतीतानुशोचनया । अनतिचिरादधिपेन संसृज्यसे ।

(यथापूर्वम् वीजयति ।)

**सैरन्ध्री** — (संज्ञां लब्ध्वा सबाष्पम् ।) भगवन्, अपि कथनीयमितोऽपि ।

विगतिर्विशंत्यथपुरीमेनामिति प्राणिमि ॥ १२ ॥

(सास्रं सखेदं ।) भगवन्, इयमपि दुर्दशा किन्नश्येत् धिक्धिक् द्रुहिणहतकदुर्लसितम् । यतः ।

कुलं शीलं रूपं गुणगणममेयञ्च विभवं

समं भर्तारं च प्रणयमपि लोकोत्तरविधम् ।

विधायादौ मोहाद्विधिरथ ससंज्ञः स्वसमय-

च्छिदाशंकी शंके कतिचिदुदधार्षीदनुपदम् ॥ १५ ॥

किञ्च ॥ खेदाय नैव विषयानुभवस्य पूर्वं

कृच्छ्राणि तावदविषह्यतराण्यपीह ।
प्राज्यं प्रभुत्वमनुभूय हि दुर्गतानां
अल्पश्च वज्रमिव दुस्सहमेव कृच्छ्रम् ॥ १६ ॥

अपिच ॥ शम्भुस्सर्वजगत्समीकरणतश्शौरिर्दनूजार्दनात्
त्वष्टा सर्जनतश्शचीपतिरपि स्वर्गौकसां रक्षणात् ।
इत्यत्र व्यसनं विनैव सुखितः स्वर्गेऽप्यहो ! दुर्लभो-
वक्तव्यं किमु देहिनां व्यसनमित्याजानसिद्धोगदः ॥ १७ ॥

तत्किमितोगतमनुशोच्य । करुणा हि तादृशी कपालिनः । अथवेदममांप्रतम् । यत्किल ।

सर्गस्थितिप्रलयकर्तुरयुग्मदृष्टे-
रिच्छामनु प्रभवति प्रमदानुभावः ।
जन्मान्तरे तमसमर्च्य तमप्रसाद्य
खेदीयसां तदपवादकथाप्रवृत्तिः ॥ १८ ॥

किम्बहुना ॥ शीलं कथञ्चिदनघम्प्रतिपालयामि
श्रीकण्ठएव गतिरित्यनिशं स्मरामि ।
शम्भुःप्रसीदतु न वा जननान्तरे वा
शं मे भवत्वथ न वा नियतिः प्रमाणम् ॥ १९ ॥

भगवन्, इयदस्तु भगवता महामुपकृतं । यत् ।

अज्ञातैव परैर्वसामि कुहचिद्रस्मान्निकल्पं प्रभो !
मा भूद्भीमसुतेयमित्यवगता नाथाश्रया वा कथा ।
क्षन्तव्यन्तदहं भवन्तमधुना याचे निबद्धांजलि-
र्ब्रह्मन्नत्र यथाऽऽगतं प्रचलितुं नोद्घाट्य वार्तां मम ॥ २० ॥

(इति सप्रश्रयम् पादयोःपतति ।)

("नपथ्ये।") अये सैरंध्रि, का ते वार्ता कस्ते नाथः कं वा प्रचलितुं सप्रणामं याचसे ।

**सैरन्ध्री** — (निशम्य। सभयकम्पं स्वात्मम्।) भगवन्, महाराजस्येव स्वर.

संयोगः, का गतिर्दैवमेव मम वार्तामुदजीवटत् । ( इति रोदिति । )
सुदेवः — किं विषीदसि । उपकृतन्दैवेन । उद्घाटनमेव हि शिवाय ।
सैरन्ध्री — किमेवमाह सर्वज्ञोऽपि भगवान् ? कथमहमवगतात्मा समक्षमेषां स्थातुमपि पारयितास्मि ।
सुदेवः — जाते, किमत्र स्थानेन । आगच्छतु महाराजइत्यारोपित महाविरुदस्ससुबाहुः । यस्तव पतिपदपद्मछायाचक्रसंस्थानमपि नार्हति ।
सैरन्ध्री — भगवन्, अतएव हि लज्जे ।
सुदेवः — किमाकलनीयमनेहसः क्रौर्याय ।

( ततः प्रविशति सुबाहुः सह मात्रा च सुनन्दा । )

सुबाहुः — 'अये सैरन्ध्रि' ( इत्याद्येव पठन्नुपसरति । )
राजमाता — वत्से सुनन्दे, सत्यमियं क्लिष्टा काऽपि नृपालपुत्री, यतः ।

गतिर्मन्दा वाणी मृदुरथ तनुः क्षुत्तृडसहा
पदावप्याक्रीडस्थलविहरणेऽपि क्लमभृतौ ।
करौ पुष्पस्पर्शेऽप्यरुणिमसनाथौ प्रभवतः
स्वभावोभीरुत्वं किमिति भुवि मालाकरवधूः ॥ २१ ॥

किञ्च ॥ मिथः स्मारं स्मारं किमपि हृदि बाष्पं विसृजती
परं ध्यायं ध्यायं प्रकृतमनुयोक्तुर्न वदति ।
महं दर्शं दर्शं मलिनतरमास्यन्नमयते
तलं लोकं लोकं किमपि च सदा चिन्तयति सा ॥ २२ ॥

अपिच ॥ सेवावशादिह मनागुदितास्ववज्ञा-
स्वस्ताङ्कुताक्षमतिवक्ति न वर्णमेकम् ।
हस्तांसशीर्ष रुजतीति न जातु वक्ति
भक्तं तदत्त्यशनमत्यणुनाऽपि तृप्ता ॥ २३ ॥

इदञ्च ॥ गोष्ठ्यान्न तिष्ठति गुरून्न विलंघ्य याति
गामन्तरेण न कुहापि दधाति दृष्टिम् ।
नोच्चैर्न चामितमुदाहरते किमुक्तैः

साऽस्तीति दुर्विदमहो सहवासिनोऽपि ॥ २४॥

तदस्याश्चरितमनवशेषमुपलप्स्यामहे ।

**सुनन्दा** — [ञ] अम्ब, जाणे सा परं पडिव्वदा किलिट्ठा अ कावि राअकण्णआ त्ति ।

**सैरन्ध्री** — (सप्रश्रयं सास्रं सकम्पलज्जमवचना तिष्ठति ।)

**सुदेवः** — दिष्ट्या इतएवागच्छत्येषसुबाहुस्सहैव मात्रा स्वस्रा च ।
प्रियन्नः प्रियम् ।

**सुबाहुः** — (पुरोविलोक्य । आत्मगतम् ।) अये कोऽयमवर्नासुरः ।

हरिन्कुशसमिच्छटाकरकमस्करोद्यत्कर-
श्चलत्पुरटकुण्डलच्छविपिशंगगण्डस्थलः ।
ससस्मानिटलस्तिरःपतितयज्ञसूत्रोज्वलः
सवाष्पनयनः किमप्यनुयुनक्ति सैरन्ध्रिकाम ॥ २५॥

किञ्च ॥ सप्रश्रयं सहभयं सहबाष्पभारं
सोच्छ्वाससन्तति च किञ्चन पृच्छतोऽस्य ।
अग्रे गुरोरिव वदन्त्यतिमात्रदूना
सैरन्ध्रिकाऽपि कमपीह दधाति खेदम् ॥ २६ ॥

मामभिवीक्ष्य भीतैवेयं । भवतु तदुपसृत्य तामाश्वास्यच तस्यारहस्यमन-वशेषमवगच्छाम ।

(इति तदन्तदृष्ट्यएव समुपसरन्ति ।)

**राजमाता** — (उपसृत्य सभक्तिप्रश्रयम् ।) भगवान्नियमहं वन्दे ।

(इति प्रणमति ।)

**सुदेवः** — भद्रे, ज्ञानिनी भूयाः ।

**सुनन्दा** — [ट] भअवं वंदामि एसा सुणंदा । (प्राणामनाटयति ।)

**सुदेवः** — वत्से, लघु सुनन्दना भूयाः ।

---

[ञ] अंब, जाने सा परं पतिव्रता क्लिष्टा च काऽपि राजकन्यकेति ।

सुबाहुः — भगवन्नभिवादयेऽहं सुबाहुः ।

सुदेवः — वत्स, शुभंयुतरबाहुर्भूयाः ।

सुबाहुः — ( उत्थाय सप्रश्रयमञ्जलिं बध्वा । ) भगवन् ।

देशः कस्तपसा प्रभोस्समलत्सिंहेभशार्दूलगुः
साधोः कौ जनिगौरवात्सुतवतां मौलिं समारोपितौ ।
शिष्यः कः कृतिनः कटाक्षसरणेरास्ते सदाऽभ्यन्तरः
सैरंध्र्यास्सुकृतश्च किं यदनघस्तामेत्य सम्भाषते ॥ २७॥

सुदेवः — ( सस्मितम् । ) वच्म्यखिलमपि । उपविश्यतां सहैव मात्रा महाराजेन ।

सुबाहुः — तथैव । ( सप्रश्रयमुपविशन् । ) कथ्यतामनघेन, अवहिताः स्मः ।

( उभे — सप्रश्रयं सैरंध्रीपार्श्वगे भवतः । ) ( सैरंध्री — सास्रमवनतमुखंतिष्ठति । )

सुदेवः — श्रूयतामवहितमस्मि वच्मि । यत्किल ।

जातोऽहं जतुजानुकस्य पृषतीदेव्यां सुदेवाभिधो-
वैदर्भः क्रथकैशिकेंद्रसदने शम्भोस्सपर्याकरः ।
पुत्रीं स्वामभितोविचेतुमनघान्भीमोबहून्प्राहिणो-
त्तेषामन्यतमोऽस्म्यहं प्रियसुताप्येषा विदर्भप्रभोः ॥ २८॥

( सैरंध्रीनिर्निरशमश्रूणि मुञ्चति । )

सुबाहुः — ( साश्चर्यम् । ) किमियं भीमसुता अथवा चक्रवर्तिचिरण्टी दमयन्ती ? ।

राजमाता — ( सहसालिंग्य सबाष्पोत्पीडम् । ) अयेवत्से, त्वं वयती, तव वेषागतिः स्थितिश्च । हा जाते, हा निषधेश, हा कृतान्त, हा नीलकंठ;

( इति मूर्च्छां नाटयति । )

सैरन्ध्री — हा नाथ, हा शंभो, ( इति मूर्च्छति । )

सुनन्दा — [ठ] अंब, अक्क, अलाहि अतीदसोअणेहिं । समस्ससध ।

( वाससा वीजयति । )

[ठ] अंब, अक्क, अलमतीतशोचनैः । समाश्वसितम् ।

**सुबाहुः**— दमयन्तीयतो, निषधराजमहिषी नत्सैरन्ध्री । आः किमियं दैवी गतिः । कथञ्च दशा देहिनां विपरिवर्तते ।

( विषादविस्मयस्तम्भमभिनाटयति । )

**सुदेवः**—( सखेदं स्वगतम् । ) कुतएष भूतार्थमभ्यधाम् । संस्कारोऽयम-ग्रजत्वस्य विशेषतोयायजूकतायाः । किमितः करवै । ( विमृश्य । ) बान्धवेषु रहस्योद्घाटनमपि न दोषायापितु परिपोषायैव परं विधेयस्य । भवतु सर्वानाश्वासयामस्तावत् । ( प्रकाशम् । ) वत्साः किमिति शुष्यथ । अलमतीतमनुशोच्य । प्रतिक्रियासरणिर्हि परमवधेया ।

( उभे — संज्ञांलभेते । )

**राजमाता**— वत्से, ननु त्वमसिमे भागिनेयी । तदेवेत्थमाकुलयति मा-न्तवेयन्दशा । हा वत्से,

सम्भूय भीमनृपवेश्मनि सार्वभौम-
भार्यापदञ्च समुपेत्य परानवाप्यम् ।
कांतारसीम्न्यटनमार्थिवदन्न चिता-
ऽप्यत्र त्वयाऽनुभवनीयमिति स्थितं किम् ॥ २९ ॥

किञ्च ॥ स्त्रीणां जन्मकथैव दूषणपदं तत्राप्यभाग्यस्पृशां
तत्रापि प्रियविप्रयोगविगलद्भासां ततोऽप्याश्रिताम् ।
तत्राप्यैतरतन्त्रचलाघवभृतामित्यत्यवद्यं जनु
र्वत्से भैमि, समाश्रयस्त्वमपि हा ! भाग्यावरोहक्रमः ॥ ३० ॥

अपिच ॥ आदौ सादरपौरवृद्धवनिताहस्ताग्रपत्रोर्णगा
पश्चादापतिसंगतेः प्रियसखीस्कन्धैकाङ्घ्रिग्रामणी ।
आसीस्त्वं तदनन्तरं निषधराडुत्संगसंगोज्वला
दुर्दैवादपसंस्तरेऽद्य हि तले लुठ्यस्यहो दुर्दशा ॥ ३१ ॥

एतञ्च ॥ भीमाज्जन्म च सार्वभौमपदवीभाजस्सतीत्वञ्च ते
दत्वा द्रागियतीन्दशाञ्च ददता सत्यं दधे वेधसा ।
आभृंगं गिरिमुन्नमय्य सहसा मत्यावनं माथिनः

सम्मण्ड्याथ नितान्तमानखशिखं वेगाच्छिरश्छेदनम् ॥ ३२॥

अन्यच्च ॥ बन्धूनाम्मदकारितामनु दधे यन्नामधेयन्तव
प्राक्पाठेन पृषोदरादिषु सुते साधुत्वमव्याहतम् ।
तन्नस्संप्रति सर्वहर्षदमनात्साक्षाच्छ्रितं साधुतां
दीनाऽप्यद्य बतासि भीषणकथा या हृद्यवार्ता पुरा ॥ ३३॥

हा भैमे, हा दमयन्ति, (इत्याश्लिष्य रोदिति।)

**सुबाहुः**—अंब, किमिति शोच्यते कृतान्तविलसितं किलैतत्। यच्च धमनी भवत्यस्याश्शोकवन्हेः। तत्समाश्वासयैनां समाश्वसिहि च।

(सबाष्पन्तदीक्षणमञ्चलेन परिमार्ष्टि)

**राजमाता**—(बाष्पान्निरुध्य) वत्से, मास्म खिद्यः। एवमेव न वासरा भवेयुः। स्यादेव जातुचन सम्मदः। उत्तिष्ठ।

**सुनन्दा**—[ड] अक्क, उट्ठेहि। मा उत्तम्म।

एद्दहपउत्तबाहप्पवाहसेएहि अहिदो अहिदो।
एमेअ ण होज्ज इदो वि किं अन्दकेदारओ इसि फलेज्ज॥ ३४॥

ता समस्ससिहि। (इति वीजयन्ती शनैरुत्थापयति।)

**सैरन्ध्री**—(लब्धसंज्ञमुत्थाय।) प्रियंवदाः खलु बान्धवाः। क्व वा मन्दभाग्यायास्तादृगिह दैवानुकूल्यम्। नन्वियं दुःखायैव कृतोदया।

**राजमाता**—भगवन्नस्माभिरपि दुराधिगमामिमां कथमिवाध्यगच्छदत्रभवान्?

**सुदेवः**—श्रूयताम्।

जानेऽस्याजलजातकोशसदृशी विभुट् भ्रुवोरन्तरे
तद्वद्दीर्घसुमंगलात्वपिशुने पार्ष्ण्योरुभे कूर्चिके।
कालोत्फुल्लनमेरुसूनमुरभीत्यात्तप्रथं कैशिकं

---

[ड] अक्क, उत्तिष्ठ।

एताव[illegible]सेकैरहितोऽहितः।
एवमेव न भविष्यति [illegible]

दृष्ट्वैतानि समभ्यगच्छमधुना सेवेयमित्याश्रमम् ॥ ३५ ॥

(सर्वे-दृष्ट्वा विस्मयन्ते ।)

सैरन्ध्री — (स्वगतम् ।) न चित्रमिदं यदिदमपि भगवानवैदिति ।

अतद्व्यावृत्त्यैव श्रुतिभिरपि संख्यातमगुणं
अणोरप्यन्तःस्थं परममपि साक्षात्कृतवताम् ।
स्फुरत्प्रत्यग्दृष्ट्या किमिह विदितं नेति भुवने
द्विजानां धीः प्रायस्सकलजनमेधातिशयिनी ॥ ३६ ॥

किञ्च ॥ बहोः कालात्तैलव्यतिकरमनाप्यातिमलिने-
ऽप्यमुष्मिन्मे गात्रे किमपि किल लक्ष्म स्वयमवेत् ।
कलेर्भूम्ना गर्ह्यैरितरमतजातैरपिहिते-
ऽप्यवन्धामाद्वैते भजति परमन्धाम यदसौ ॥ ३७ ॥

आस्तामिदं । किमितश्श्लिष्यति मन्दभाग्यायाः । अथवाऽस्ति नाम किमपि मुखमुखम् । यदकलेषु न सज्जन्ते महात्मानः । सच प्रकारः कथमिति नोपलभ्यते ।यतः ।

द्यूतेन ग्लहतामवापितमभूत्सर्वस्वमास्तामिदं
पत्युर्वा वसतिः क्व वेति मनसोऽप्यास्ते हि दूरे कथा ।
सर्वस्वश्रयणं तथैव दयितप्रत्यागमश्चेत्युभे
प्रत्याशापदवीमपि प्रविशतो नैवात्र भैमीहृदि ॥ ३८ ॥

तत्र च विधिर्महान्तो महादेवोवा प्रमाणम् । (इति चिन्तां नाटयति ।)

राजमाता — भगवन्, अपि नाम सुदेवमप्यस्याः ।

वत्सामम्रूं पतिमतीमपि वीक्षिताहे
किं वा पुनर्भुवि यथापुरमाप्तभाग्याम् ।
प्रायेण घर्मविधुरामनु मल्लिवल्लीं
भूयोऽपि पल्लवसमागतिरत्र शंक्या ॥ ३९ ॥

सुदेवः — मैवं मास्म विषदत
सत्यं समेष्यति शुभस्समयस्तदानी-

मस्यायथापुरमुदेष्यति भाग्यराशिः ।

हंहो ! निदाघसमये सिकतैकशेषा-

ऽप्यब्दागमे सरिदुदीरयति स्वमोघम् ॥४०॥

( नेपथ्ये । शंखध्वनिः । )

**राजमाता** --- निमित्तमपि शुभमुदर्कमेव सूचयति ।

**सैरन्ध्री** --- किमल्पभाग्याया अपि शुभमिति ।

( पुनर्नेपथ्ये । )

**वैतालिकाः** --- विजयताम्महाराजः । सुखाय देवस्य माध्यन्दिनी सन्ध्या ।

पारेव्योमवनान्तरं विधिवशान्मन्देहदूरीकृता-

मप्यग्रे द्विजमन्त्रवर्यविभवेनाभ्येत्य भूयः प्रभाम् ।

आवृत्यापि च पुष्करं स्वमहसा भूरिप्रतापोज्वलो-

भास्वानेष विराजतेऽसमदशस्सत्सम्मते वर्त्मनि ॥४१॥

**सुबाहुः** --- भगवन्नुपश्रुतिरध्यनयोर्जम्पत्योश्शुभोदर्कमेव पिशुनयति

**सुनन्दा** --- [ढ] तह जेव्व अइरा सुहोदक्को अक्काए ।

**राजमाता** --- प्रकारः परमधुना पारेवाङ्मनसम् ।

**सुदेवः** --- वत्साः अत्येति नाम माध्याह्निकसमयः परं प्रत्यवसानादखिलमपि ।

**सैरन्ध्री** --- ( स्वगतम् । ससमाश्वासम् । )

सुखमसुखंवा न भवेत्स्थास्नु जनस्यात्र जीवयात्रायाम् ।

ते हि तरंगिणि निर्झरनीरे निम्नोन्नतप्राये ॥४२॥

**सुबाहुः** --- बाढं । साधयामस्तावत् । ( इति निष्क्रान्तास्सर्वे । )

इति श्रीमद्दश्रीपण्डितनारायणसुदर्शनीये कलिविधूननाटके

प्रतिपत्तिर्नाम सप्तमोंकः --- शिवाभ्यां नमः

---

[ढ] तथैवाचिरात्सुखोदर्कोऽम्बायाः ।

अथाष्टमोंकः

(ततः प्रविशति सहर्षोल्लासं सहत्वरं पर्णादः ।)

पर्णादः — धन्योऽस्मि यन्निरवर्ति हि निदेशो नृपालसुतायाः । यथा किल सः । "ब्रह्मन्नटतु भवानास्थानादास्थानं पठतु च पद्यमिदं । यत्किल ।

"सर्वज्ञस्सदयस्समाश्रितजनत्राणव्रतस्सत्यवा-
क्सम्राट्सप्रतिमस्सुनिर्मलमनास्सारैकदृक्साभियः ।
सोत्साहस्सरलस्सदेति च नुतस्सत्रे सतां स्वप्रजं
स्कन्दन्नर्धपटं प्रतार्य च गतः प्रैक्षि क्व वाऽसौ नरः ॥ १ ॥ „ इति

ततस्ततः प्रतिवक्तुराधिकरणमधिकारमाकारञ्च साभिज्ञानमभिज्ञाय मत्वरमागम्यतामिति । कृतार्थोऽस्मि यद्यदृच्छया साकेतमनुप्रविष्टः प्रति ऋतुपर्णास्थानमिध्यगच्छममुष्य प्रतिवक्तारं । यः किल ।

दीनाराणि शतं स्ववेतनतया प्राप्नोति राजाज्ञया
शिक्षन्नुद्भटघोटजातमनिशं धाराविशेषान्बहून् ।
भूभेवाश्वनिषादिनां कृततनुः खर्वस्तमालच्छविः
क्रूरांगोऽपि दयामिव श्रितवतां पुष्णन्विभात्यद्भुतः ॥ २ ॥

(स्मृतिमभिनीय । सश्लाघम् ।) साधु भो बाहुक साधु ! यदुपपन्नमानिहितमत्र भवता । यथा ।

" जाने तन्नरमात्मना मम शपे सत्यं सतावद्गुणः
श्लाघायाः पदमेषकिन्तु भवता निन्दानिधानं कृतः ।
सन्दर्भानुगुणं तदेषकृतवान्क्रौर्यं तदस्मिन्सक्त-
द्वक्तुर्वाचयितुर्जनस्य च भवेद्दोषोहि दूरे गिराम् ॥ ३ ॥

यतः ॥ साध्वी सर्वजनानुशोच्यचरिता तन्वीयमस्मिन्वने
दास्म क्लिश्यत दुर्मगेण कथमप्याप्नोतु बन्धूनिति ।
मत्वैवन्नु सगाहृताम्बरतया हृत्वाऽप्यथार्धांशुकं
सुप्तैषाऽवसरोयमित्यपि अहस्त्वेष्छ तपस्वी गतः ॥ ४ ॥

किं बहुना ॥ कर्मणामत्र सर्वेषां साक्षिण्यस्सन्ति देवताः ।

विदुस्तास्तदहं वाऽत्मा तस्य वेद यथायथम् ॥ ५ ॥ ,, इति
तदिह ममापि करणीयमिदं वाचिकहरणमेव । परमत्र भवति निमित्तमत्र-
भवती भर्तृदारिका दमयन्ती ।प्राप्तोऽस्मि च प्रशांतसकलपौरजनप्रमदो-
त्सवमासन्नशोकाधिदैवतमिव क्रोडीकृतविदर्भतनयं कुण्डिनपुरं । तद्यथा-
शक्ति त्वरितपदं परिक्रम्य संदेष्टुरुच्चै वाचिकमावेदयामि ।

( इति निष्क्रान्तः । ) ( इति शुद्धविष्कंभः । ) शिवाभ्यान्नमः ।

( ततः प्रविशति सौधवितानस्थस्सह सुबुद्धिना सावित्रः । )

सावित्रः — ( परितोविलोक्य । सहर्षम् । ) अये कथमिदं यत्किल ।

धर्मेऽप्यद्य घनामृता हि सरयूरभ्रंकषाश्च द्रुमाः
फुल्लच्छारदरेणुगौरवपुषः खिद्यद्रदाश्च द्विपाः ।
पौराः प्रौढमुदः प्रियाभिरतुलाकल्पाभिरासेविताः
भूमिर्भूरिफला च तत्पुरमिदं वैरायते किं द्यवा ॥ ६ ॥

अपिच ॥ नष्टं वैरमभून्मृगेष्वपि मुदा शांतिर्जनैराप्यते
दूरे भीरिति नाम चातिपरुषादोषाः कुतोऽपि द्रुताः ।
पूरप्याप्तरसा निरस्तकरणा मन्दीभवत्स्पर्शना
केनाप्येत्य समागमं सुकृतिना यातेव निद्रां सुखात् ॥ ७ ॥

अमात्य , किं ज्ञायते कस्समहानिति येन हि वसता सर्वतोधर्मतया प्रजानां
सालभंजिकासदृशमक्रियमेवास्थ्यास्थानमण्डपे ।

सुबुद्धिः — ( आत्मगतम् । ) अपि तावान् बाहुकएव स्यात् । यदस्य ।

सर्वाऽप्याकृतिरीक्षितैव विवृणोत्यत्यायतं तन्महो-
वाग्गुंभैरनुमीयते सुकुशलः स्यादेषशास्त्रेष्विति ।
वैदग्ध्यं प्रसमीक्ष्य तस्य च कलाज्ञानं महत्तर्क्यते
सौशील्यानुगुणं जितेन्द्रियतयाऽप्यस्मिन्ध्रुवं भूयते ॥ ८ ॥

अपिच ॥ अन्ये वैतनिकाश्रवानृतमयं नो वक्ति रिक्थास्थया
दुर्विशाक्षाइति शिक्षतीह न चिराद्भ्रामलसुशिक्षानपि ।
लोकं वाऽपि तदाद्रदाति भृतकं नाख्याति कल्याणवतो ।

न स्पृष्ट्वाऽपि वशीकरोति तुरगान्कोऽप्येषगूढः कृती ॥ ९ ॥
तथाऽपि कथमिदं निश्चीयते यदसावेव हेतुरस्यास्सुस्थितौ भूमेरिति ।
यद्वुरवगममहिमानः कति न सन्ति नाम जगति महात्मानः ।
( प्रकाशम् । ) ममापि चिराय सततमधिवसति हृदयमयं विशयः । कथं पुनरीदृशा महात्मानः कलुषहृदयैरस्माभिरध्यक्ष्यन्ते ।

सावित्रः — कथमेवं संशयेनैव क्षप्यते कालः ; नन्वसौ नाम महानपराधः यदभ्यागतामहान्तोऽप्युपेक्ष्यन्तइति ।

सुबुद्धिः — अचिरादन्विष्यते ; अथवा स्यादेषदेवपुण्यपरम्परयैव ।

सावित्रः — अलमलमतिनियन्त्रणया । पश्य यद्यस्ति कोऽपि महानिति ।

सुबुद्धिः — यथाऽऽदिशति देवः ।

( प्रविश्य पत्रहस्तःसान्देशिकः । )

सांदेशिकः — देव, विदर्भराजप्रहितमिदं पत्रम् ।

( इति विष्टरे पत्रंनिदधाति । )

सावित्रः — ( सकुतुकविस्मयम् । ) किमिदमाकालिकमकारणमतिप्रियसखादद्य लेखवृत्तम् । वाच्यतां सिच्येतांच नःश्रवसी ।

( पत्रममात्यहस्ते ददाति । )

सुबुद्धिः — यथाऽऽदिशति देवः । ( पत्रमुद्घाट्य वाचयति । )

" स्वस्ति सावित्राय सकलमहीपालमौलिलालितललितचरिताय निखिलकल्याणगुणगणैकरत्नाकराय प्रियसखाय राजर्षयृतुपर्णाय । प्रियसख, प्रियवयस्यप्रहितमसंख्यपरिरंभपुरस्सरमिदमिदमफल्गु किञ्चिदिव विज्ञापनाक्षरनिकुरुम्बमविलम्बममत्रयतामादरेण नेत्रयोरुत श्रोत्रयोः । । तद्यथा ।

कुशलमत्रभवतस्सख्येन प्रसादेन च पशुपतेः ; अभेद्गेव मित्रमुखादधिसमक्षमाचिकर्णयिषे । अथ ? मकृतम् ? । दुर्विवेको हि दुर्विपाकः कर्मणाम् ।, चिरन्तनसुखभरविरोधी खलु प्रजापतिः

प्रजानाम्, सकलगुणसंगमाक्षमा हि देहिता देहभृताम्, बहुमुदिराकारक्षणभिदुराः किल दशाभाग्यानाम्, विवेयपथविमुग्धः किल सार्वोमुग्धवधूजनानाम्, स्वजनच्छन्दानुयातारौ किल मातरपितरौ, समयसमुचितमतयः किल प्रकृतयः, साधुसमीरितमेव हि शास्त्रम्, कतिपयपरिचितएव प्रथममाचारः गतानुगतिकः किल लोकः, बहुजनबहुमतमेव हि निरवद्यं कर्म, इत्यादि निध्याय, निध्याय च दुर्दशां निषधराजस्य, निर्वर्ण्य च नाथविरहव्यथां वत्सायाः परितः पृथ्वीमण्डलमन्विष्याप्यलब्धतत्प्रियप्रवृत्तितया निवृत्य निर्वर्त्य च पुनरपि कुमार्या यथापुरमाभ्युदयिकीं क्रियामात्मनैव तया वृतेन वरेण वरेण पुनरपि संयोजनमाचिरेण भाविनि दशम्यामिंदुवासरे विभाव्यमिति कृतमतिरयमयमात्मसखस्तत्रभवाद्भिरामण्डनीयमवनिपालमञ्जसञ्चयेष्वेकतममिति कृतगाढाश्लेपमभ्यर्थये; परमत्र निमित्तमत्रभवानुत मम भाग्यमुताहो भगवती भवितव्यतेत्यलमति हल्लोहलेन।

सन्तु सहस्रशः संश्लेषाः इति चिरतरसमुपचितनिरुपमनिर्भरस्नेहगर्भो वैदर्भो
* भीमः *

नन्दनशरन्माघमावदिसप्तमी। शुक्रदिवे लिखितम्।

शिवाभ्यान्नमः ॐ तत्सत्

सावित्रः — (निशम्य सविस्मयम्। जनान्तिकम्।) अये केयमाभ्युदयिकी क्रिया।

पुत्रिण्याः क्व नियोगमाह निगमश्चेदप्यहो किं परैर्नष्टत्वेन नलस्य किम्वुपयमो भूयोहहा दुष्कृतम्।
स्याच्चेद्यौवनचारिताध्यर्यविधये स्वैरप्रचाररतथा प्रत्यक्षन्नु नृणां विधेयमहह! प्रेम्णा विचारोहतः॥ १०॥

किञ्च॥ आसीद्धर्मइवस्वयं निषधराट् तस्यैकजाया वधूः कामार्त्ता दिधिषूबुभूषति यदि कान्यत्र धर्मः परः।
प्रत्येष्यस्यथ कस्स्मृतीर्बहुमताः क्व स्युः श्रुतिस्थागराः

क्वादोषोभवितास्न्वय: किमु कृतेऽप्येवं कलेरुच्छ्रितिः ॥ ११ ॥

(प्रकाशम् । सान्देशिकमुद्दिश्य ।) भो विश्राम्यतां परमाहूयसे ।

**सान्देशिकः** — यथा देवस्याज्ञा । (इति निष्क्रान्तः ।)

**सुबुद्धिः** — महाराज, मैवमनुमीयते हि लेखविधयैव बहुजनबहुमतत्वमस्य कर्मणः । कलुषकाकरूकताच वैदर्भस्य । तदनुपेक्ष्यमेवात्मसखिविज्ञापनम् ।

**सावित्रः** — अनवहितमनुमतमिवेदमभिजातैः । यद्वा तद्वा भवतु । परमनुष्ठेयमेव प्रियसखवचनं नः । (विमृश्य ।) कथमिदमनुमन्येरन्नन्येऽपि पौरवृद्धाः । कथं वाऽयमनृतमस्मभ्यं लिखेत् । तत्सत्यमिदं भाव्येव सकलमपि । अस्मभ्यमभिप्रेषितमिदमिदं पत्रमतिसन्धायकरीत्यैव । यतः ।

आगन्तव्यं श्वइति लिखितं दूरदूरे विदर्भाः
न स्यादन्यत्सदृशकरणं व्योमयानं विनाऽत्र ।
सत्यं ग्राह्यं प्रियसखवचः कौतुकश्चातिमात्रं
सन्दर्भोऽसौ परमतितरां दुर्घटः किं प्रलापैः ॥ १२ ॥

**सुबुद्धिः** — देव, व्योमयानेनैव सुतरस्सुदूरोऽपि पन्थाः ।

**सावित्रः** — (स्मृतिमभिनीय ।) कोनु खल्विदं भोः । बाहुके स्थितेऽपि बलमन्यदपेक्ष्यम् ।

**सुबुद्धिः** — शंके तस्यापि श्रमसाध्यएव सन्दर्भः ।

**सावित्रः** — आहूय पृच्छ्यतां परमुत्पश्यामः ।

**सुबुद्धिः** — यथाऽऽदिशति स्वामी । (इति परिवृत्य ।) कःकोऽत्रभोः ।

(प्रविश्य साचिन्तं बाहुकः ।)

**बाहुकः** — (आत्मगतं शुभनिमित्तम् सूचयित्वा सवितर्कम् ।)

दूरे मम हि सुभगता स्फुरति भुजा सह दृशा च दक्षिणया ।
अथवा विरिञ्चिविलसितमवितर्कितसम्भवं हि भवति नृणाम् ॥ १३ ॥

भवतु द्रक्ष्यामः किमस्य फलम् । (परिक्रम्य । पुरोऽवलोक्य ।) अये, इहैव किमप्यमात्यसुबुद्धिसहायः प्रजान्तराख्यातमावेदाति स्वामी तद्यावदुपसर्पा-

मि (इत्युपसरति।)

उभौ — (वीक्ष्य। सहर्षम्।) कथमेषस्मृतमात्रएव मनोरथइव समुपस्थितोबाहुकः।

बाहुकः — (उपसृत्य।) जयतु जयतु स्वामी। (प्राञ्जलिस्तिष्ठन्।)

ह्यः प्रातः प्रहितास्त्रयोऽपि तुरगास्सम्यग्विनीता मया
साध्वीमेव गतिं समादधति ते संपूर्णशिक्षाइव।
अन्ये तेऽपि वनायुजा दश विना दोषान्विभोर्भूतिदाः
सर्वेऽप्यद्य मदालसाः क्षणवशाद्व्यायम्यमेतैर्भृशम् ॥ १४ ॥

तदापतितोऽस्मीदमावेदयितुमाकर्ण्य देवः प्रमाणम्।

सावित्रः — अमात्य,। इच्छानुकूलस्सन्दर्भः प्रत्यग्द्दगिव बाहुकः
विविच्यतां विधेयार्थो विशयो व्यपनीयताम् ॥ १५ ॥

सुबुद्धिः — बाढं। (परिवृत्य।) सखे बाहुक, सन्दर्भानुगुणमाह भवान् अद्य किल।

श्वः प्रातः क्रथकैशिकेषु सनलः क्वेत्यश्रुतत्वात्पुनः
संक्लृप्ते तनयास्वयंवरमहे भीमो हि नः कांक्षति।
तद्गन्तव्यमितो हि कुण्डिनपुरं दूरे गिरामप्यहो!
कार्यं किम्विह का गतिः कथय किं क्लेशाय नो कल्पते ॥ १६ ॥

बाहुकः — (निशम्य सविस्मयखेदमात्मगतम्।) किम्विदं यद्दमयन्त्याअपि पुनः स्वयंवरइति (सगौरवम्।)

भीमश्शुद्धनृपालवंशतिलको धर्मैकतानान्तर-
स्तत्पुत्री च सुधीस्सदाऽपि विदिता साध्वीति सर्वैरपि।
भूयोऽनुग्रहनीतिगाश्च सुकृते सज्जन्ति नाम प्रजाः
वार्तैषाऽपि कथं स्वयंवरइति व्यज्ञायि राज्ञाऽमुना ॥ १७ ॥

अथवा भवितव्येदमपि। यद्रागादिभिराकुलीक्रियमाणमनसो महातापधर्म्याल्पथः प्रच्यवन्तीति निसर्गस्सर्गस्य। तद्यथा।

तौ भरद्वाजकतकौ भार्ये व्यत्यस्य जग्मतुः।

वसिष्ठोरंस्त चण्डाल्या दुहित्रा च प्रजापतिः ॥ १८ ॥

किञ्च ॥ न्यायालोकविधाढढीकृतधियां पुंसामपीयं दशा
नार्यस्तावदुदारमारविवशास्सन्तीति का चिन्तना ।
नो विद्या न च चातुरी न कुशलैस्संगः कदाचित्स्त्रियाः
शुद्धान्तैकजुषो न लोकगणना स्थैर्यं क्व तस्या हृदि ॥ १९ ॥

तत्स्यादेव कामतः कामगमन्यं कामयमानाऽपि दमयन्ती (विमृश्य ।)

यद्वा ॥ किमिदमनृतमेवं दिक्षु विख्यापयन्मां
अवजिगमिषतीव प्रेमगर्भो विदर्भः ।
उत मम फणितानि प्राप्य पर्णादवक्रात्
मम धृतिमवगन्त्र चास्तन्त्वमेतात्प्रियायाः ॥ २० ॥

तन्ममापि कुतुकितमत्र मनः । भवतु प्रतिनिगदाम्येनम् । (प्रकाशम् ।)
आर्य, किमेषएवमहाराजक्लेशविषयः । वीक्ष्यतामहर्विगमात्प्रागेव कुण्डिनमामण्त्र्यते स्वामिना ।

**सावित्रः** — अलमुदितैराचरतु सखा यथा निगदितम् ।

**सुबुद्धिः** — बाहुक, दर्शयाधुनैव तवाश्वियाशिक्षादक्षताम् । यदव सरोयमधिकारहेम्नः कषदृषदनुषंगइति ।

**बाहुकः** — स्वामिन्, क्रियांकेवलमुत्तरयै ॥ साधयामि ।

(इति प्रणम्य निष्क्रान्तः ।)

**सावित्रः** — अमात्य, प्रविष्टे कुण्डिनएव प्रशाम्येन्मम त्वरा । तदभितोऽप्यप्रत्ययमेव चेतः । तद्बाहुकवचनमप्यर्थवादमाशंकते ।

**सुबुद्धिः** — महाराज, मैवम् ।

जात्वेष नैव गदति स्वनुतीरसत्याः
प्रत्येयमेव किल तद्वचनं यथार्थम् ।
शंसन्ति नैपुणममुष्य तुरंगतन्त्रे
लोकोत्तरं किमपि सिक्तधियोऽपि सूताः ॥ २१ ॥

**सावित्रः** — सत्यं तथाऽपि स्वकार्यगौरवमेव सर्वस्मिन्नपि सुतर प्रतीतिं जनयति ।

भवत्वस्य वचस्सत्यं न विलंबसहम्मनः ।
आनीतावेव किन्तावांश्चिरायत्येषचाक्रिणः ॥ २२ ॥

सुबुद्धिः — द्रागेवापतेत् । अदीर्घसूत्रः किल बाहुकः

(प्रविश्य । सप्रश्रयम् । प्रणम्य ।)

दौवारिकः — [अ] जेदु जेदु भट्टा सण्णिहिदो मणोरहेणेव्व रहेण सह अज्जबाहुओ भट्टिणो आअमणं पडिवालअन्तो पडिहारठ्ठलम्मि चिठ्ठइ । अह भट्टा प्पमाणम् ।

(इति निष्क्रान्तः ।)

सावित्रः —

(निशम्य सहर्षोल्लासम् उत्थाय पञ्चषाणि पदानि परिक्रम्य वलभीस्थएव पश्यन् ।)

अमात्य, । सौम्येन पश्य विधिनेव स बाहुकेन
संस्थापितो धुरि मनोरथवद्रथोमे । (निर्वर्ण्य - साशंकम् ।)
अर्वत्सु सारिषु लसत्सु किमत्र वीतः
संयोजितः ? (इत्यर्धोक्ते विस्मयस्तम्भनाटयति ।)

सुबुद्धिः — महाराज, शिक्षागरिम्णा कदाचिदयमतिहारदाखलहरिदुल्लंघनजंघालजंघः परिणन्ता ।

सावित्रः — किं वा । स्यान्नाम तथाऽपि । यतः ।
सुमनसो हि दुरूहसत्वाः ॥ २३ ॥

अमात्य, सौधावतारसरणिमादर्शय ।

सुबुद्धिः — इतइतोदेवः । (इति करमवलम्ब्य नयति ।)

(ततःप्रविशति प्रतोलीस्थस्सवेत्रतीत्रस्सह रथेन सारथिः ।)

सारथिः — (आत्मगतम् ।) सेवा नाम निखिललज्जानिधानमनिदानलाघवाधिकरणमाजानसत्वकुण्ठकञ्च प्राणिनाम् । यदद्य स्वस्यैव स्त्रीं सिंषाधयिषतस्सावित्रस्य स्वेनैव साहाय्यकमाधेयमित्यापन्नमत्र मे ।

(दीर्घमुष्णञ्च निश्वसिति ।)

---

[अ] जयतु जयतु भर्ता संनिहितोमनोरथेनेव रथेन सह आर्यबाहुकोभर्तुरागमनं प्रतिपालयन् प्रतिहारस्थले तिष्ठति । अथ भर्ता प्रमाणम् ।

**सावित्रः**— अविलंबमेव स्वयंवरानुगुणमण्डनमण्डितः स्यन्दनमुपधावामि । त्वर्यताम् । ( त्वरितपदमवतारनाटयन्नेव निष्क्रान्तः । )

**सारथिः**— ( सबाष्पम् स्वगतम् । ) सर्वथाऽस्म्यहमेव गर्हणीयः । सावित्रः पुनस्सुगृहीतनामैव । यतः ।

उन्मुक्ता विपिने वधूः स्वगृहमेवाप्ता शुभाकांक्षया
कालं कञ्चिदपि प्रतीक्षितवती नो वार्तवार्ताऽपि मे ।
तारुण्ये दयितैकसंश्रयधृति स्त्रीसन्ततेर्जीवितं
जाता तेन पतिंवरा विभुरतस्तां वष्टि वाच्यस्सा किम् ॥ २४ ॥

( आकाशे । ) पूर्वं स्वयंवरकुतूहलतोगतोऽहं
मध्येपथं त्रिदिवदेवभटत्वमाप्तः ।
अद्यापि तत्कुतुकिनोनृपतेर्भटोऽस्मि
दूत्याय किन्नु युवतेर्व्यदधाद्विधिर्माम् ॥ २५ ॥

ततोऽप्यधुनातनमेव दूत्यमभिधुनोति मम हृदयम् । यतस्तदा किल ।

सौभाग्यसम्पदमुदीक्ष्य मदीयदूत्य-
श्रित्यै सहांजलिसुराः किल मामनाथन् ।
अद्य त्ववद्यभटवृत्तिभृतं हि साह्ये
सञ्चोदयत्ययमलं जननैरभाग्यैः ॥ २६ ॥

सत्यमहं दुर्भगएव यतः ।

मात्रादण्डसनामितामधिकरं तोत्रं समालम्बते
तद्वत्कूबरदारु मध्यमयते भद्रासनप्रक्रियाम् ।
शश्वद्रश्मिगुणोरदच्छददले राजीवनेत्रीकरां-
गुल्यग्रार्पितवीटिकासमदशां धत्ते रथस्योद्धतौ ॥ २७ ॥

( बाहू प्रसार्याकाशे । )

हा देव ॥ सर्वैश्वर्यवशान्निषेवणरुजं सव्यार्धजानित्वतः
स्त्रीविश्लेषशुचश्च सर्वगतया वैदेशिकार्तीरपि ।
न त्वं वेत्थ तदेव मां व्यथयते सावित्र्युपाख्यानने-
न्मद्वार्तामिति शृण्वतोऽपि नतया श्रीशैलकन्योदितः ॥ २८ ॥

( स्मरणमभिनीय । )

हा शंभो ॥ कदा नानाद्वीपागतनृपतिनीरन्ध्रपदवीं
सभामभ्यागच्छन्सचिवधृतहस्ताग्रकिसलः ।
दृशैकं वाचैकं कमपि करसंगेन कमपि
स्मितेनान्यं स्पन्दैश्शिरसइति सभ्यांश्च सुखये ॥ २९

किञ्च ॥ कदा वा सौम्येऽपि प्रतिभयनिवेशे प्रविशतां
सदस्यध्यासीनस्सुभगमणिसिंहासनतलम् ।
समन्तादाचारान्विदधति विनीते परिजने
सदश्चित्रस्थायं स्थितमभिगदिष्यामि किमपि ॥ ३० ॥

अपिच ॥ कदा क्रीडागारे ग्रथितकुसुमस्त्रक्परिमल-
स्त्रवंतीसम्मूर्च्छन्मदमधुपझंकारमुखरे ।
नतांगीभिर्नीतश्शयनसदनन्द्वार्यनिमिषं
प्रियायास्तद्वक्त्ये लिखितमिव पद्मं मुखमपि ॥ ३१ ॥

इदञ्च ॥ कदा वा कल्याणीं कथमपि नयन्नंकफलकं
कराभ्यामाश्लिष्यन्किमपि कथयिष्यान्निव मिथः ।
कपोले संचुम्बन्कलितबहुलव्रीडविनता-
त्कथञ्चित्तद्वक्त्रात्किमपि मधु पास्यामि मधुरम् ॥ ३२ ॥

अपरञ्च ॥ कदा वा गाढालिंगनसमयकुब्जीकृतकुचं
कराधूतिप्रोद्यत्कनकवलयक्काणरुचिरम् ।
प्रभो, मा मा मा मेत्यतिकुञ्चितसर्वांगसुभगं
वपुस्तस्यामीलन्नयनमुपभोक्तास्मि विवशः ॥ ३३ ॥

अन्यच्च ॥ कदा वा तामिस्त्रावृततुहिनरश्मिः फणिमुख-
स्खलन्मुक्ताजाली,जलजगतपारावतरुतः ।
स्तालम्बालोलक्षितिधरयुगस्यूतजठर-
मवालः कालोऽसौ शुभमनुभवन्मां मदयिता ।

एतच्च ॥ कदा वा तन्वंगीं द्विरदमृदितां वा बिसलतां

कलातीतश्वासामुरासि कृतदेहां मृदु वहन् ।
श्रमाम्भश्छेलांतैः स्वयमपनयन्नास्यलसितं
प्रियायास्तद्रक्ष्ये स्मितमपि सुमं संमृतितरोः ॥ ३५ ॥

क्वेदमखिलमकृतसुकृततयैव नित्यदुर्गतेरस्य मम सुलभम् । (अश्रुपातमभिनीय । सभयसम्भ्रमम् । ) हन्त ! किमियमीदृशमपि मामाकुलयति स्मृतिरतीतसौभाग्यस्य । यन्निरर्गलमुद्गालयत्यश्रूणि । न खलु सुखदुःखस्मृतिस्सुसदृशी सेवाभृताम् । किञ्च जैत्रयात्रामनु स्वामिनः सुतरामसांप्रतमश्रुमोचनम् । (अश्रुनिरोधनाट्यन्नेव । ) किञ्चिरायति सावित्रोऽपि ।

(इति राजकुलद्वारमीक्षते । ) (ततः प्रविशति वार्ष्णेयकरमवलम्बमानः सावित्रः । )

**सावित्रः** — सूत, पश्य त्वमपि बाहुकसारथ्यसामर्थ्यम् । अपि त्वं वाऽस्य वचः प्रत्येषि ।

**वार्ष्णेयः** — आयुष्मन् अनिरीक्ष्य पदेषु प्राभवमेनं कथमिति विशिंष्मः

**सावित्रः** — भवतु निर्वहणनाम्नीं निकषदृषदमनु सकला अप्यस्य चतुरिमचामीकरश्यामिकाविशुद्धयः प्रकाशीभविष्यंति । (सकुतुकमुपसर्पति । )

**सारथिः** — (निर्वर्ण्य । ) अये एषहि ।

पत्रोर्णपल्लवपरिष्कृतिपाण्डुमौलिः
कस्तूरिचित्रकचमत्कृतिचारुफालः ।
भूमौ कृतांघ्रिरपि खे निपतन्निवाय-
मायाति कौतुकमिवांगवहं महीशः ॥ ३६ ॥

किञ्च ॥ स्वप्नेऽपि दुर्लभतमां सुदतीमिदानीं
दैवात्स्वयंवरसुसाधतमां विजानन् ।
मत्संविदा द्विगुणितं कुतुकञ्च बिभ्र-
न्निश्शंकमेति दृढनिश्चितदारलाभः ॥ ३७ ॥

स्वागि ... ण्ये समुपास्थिते तरलयत्यन्तर्मनोमन्मथे
ध्यातध्या... गविहारविभ्रमलव्याविद्धधैर्यध्वजाः ।
निर्लज्जा
...लपाभयोनिरुद्धपानिर्मौरपानिर्भयाः

निष्प्रज्ञानिहतश्रुताश्च निधनं यन्त्यप्रमत्ताअपि ॥ ३८ ॥
महत्स्वप्येवमनन्यजेन व्याकुलीभवत्सु किंपुनः किंपचानास्तथेति ।
(सविस्मयमीक्षमाणस्तिष्ठति ।)

सावित्रः— (सहसोपसृत्य ।) बाहुक, साधु ? किमहमारोहाणि स्यन्दनम् । (वार्ष्णेयंप्रति ।) सूत, सजवमारोहावस्तावत् ।
(इति सहवार्ष्णेयमेव रथारोहणं नाटयति ।)

सारथिः— (आत्मगतम् । सविस्मयम् ।) अतिरभसिनी किल स्वामिनश्चित्तवृत्तिः । तद्यथा ।

नायोध्यैव किमद्य कुण्डिनमभूत्किं न स्वयं स्यन्दनो-
भीमक्ष्मापसुतास्वयंवरधरामञ्चासनं नाभवत् ।
ग्रीवामौक्तिकहारएव वरणस्त्रङ्नाभवत्तत्कुतः
किं वैतच्च न सूतएव सुदती सा मे विदर्भात्मजा ॥ ३९ ॥

भवतु सेवां स्वां समग्रये । (इति कूबरमारुह्य कविकां हस्तयोः स्पृशति ।)

सावित्रः— (सम्यगुपविशन् ।) बाहुक, अथ कोविलंबः चोद्यन्तामश्वाः ।

सारथिः—महाराज, स्वामिन्निमे मुक्ताअभीशवः ।
(इति खलीनमवलघयन्नश्वपातमभिनयति ।)

सावित्रः—आः किमिदमनिमित्तम् । (स्वगतम् ।) अपि नाम सा दुर्लभा यदेवमाविर्भवति दुर्निमित्तम् । अथवा किन्निमित्तेन, निमित्तं भ्राम्यस्य नीलग्रीवः । (प्रकाशं सरोषहासम् ।) किमेभिरेवाश्वैरश्वः कुण्डिनमचिरात् । साधु भो हयपरीक्षक साधु ।

सारथिः—महाराज, क्षम्यतामीक्ष्यताञ्च द्रागमीषामेन जितपवनधारा परिक्रामधारा । (क्षणमिव क्षणमभिनीय ।) यात तुरगा यात ।
(इति खलीनमवलघयति ।)

वार्ष्णेयः—महाराज, मक्रान्तं किल प्रचण्डमेव परिक्रमणमश्वः ।

सारथिः— (सकौतुकम् ।) आयुष्मन् । अद्य किल ।

अमी वाहादेहाच्छविमजिततूलानिव दिवि
क्षिपन्तस्सन्तोषादिव धुरि वहन्तोऽद्भुतगतीः ।
समुन्नम्रग्रीवास्समरयमधोऽधस्स्वचरणा-
त्समायांतीं छायामिव लघु जिगीषन्ति तरसा ॥ ४० ॥

**सावित्रः**— (निर्वर्ण्य सविस्मयम् ।) सत्यमत्युच्चैःश्रवसोऽमी वाजिनः ।
यतः ॥ नो शाखान शिखाः पृथक्क्षितिरुहां पश्यामि रेखाः परं
शैलाः कोष्ठकुसूलजालसदृशाश्शून्यां तटीं बिभ्रति ।
दृक् च व्यक्तिषु जर्झरीभवति नः पक्ष्माऽपि वीक्षाऽक्षमः
शीर्षं भ्राम्यति दर्शनेन परितस्सर्वत्र मृष्टेव भूः ॥ ४१ ॥

वार्ष्णेय, अथेदृशमपि क्वाऽपि सारथ्यम् ।

**वार्ष्णेयः**— न जातुचिदुल्लिखितमपि मनसा । अद्भुततममेवेदं पश्यत्वायुष्मान् ।

भूस्सर्वप्रथयेव संस्कृततला भात्येकरूपाऽभितः
नाना स्यन्दनमत्र नैव तृणमप्यालक्ष्यतेऽभ्यंतरे ।
कंपैः क्रेंकृतिभिश्च नन्ववनिगश्चक्रोच्चयस्तर्क्यते
धावत्यत्र हि विश्वमेव चलनं नास्तीव नः स्यन्दने ॥ ४२ ॥

**सावित्रः**— साधु भो बाहुक, साधु, सत्यमसि हयहृदयवित् ।
(वार्ष्णेयमुद्दिश्य । जनान्तिकम् ।) सूत, कस्य वेयती मात्रा गन्धर्वशिक्षातन्त्रे ।
ततः किल ॥ सुब्रह्मण्यसमीकसंस्तुतकरः किं मातरिश्वा स्वयं
किं वा काश्यपिरेव भास्करकरैरास्फालितांसद्वयः ।
किं वाऽधिष्ठितदेवदैत्यरणभूरेषस्वतोमातलि-
र्यद्वा सैन्धवतन्त्रनिर्मितिपटुः किं शालिहोत्रोमुनिः ॥४३॥

अपिच ॥ किं वाऽसौ त्रिपुराभियोधिनि हरे वेदाश्वसादी विधि-
र्यद्वा किन्नलएव सतिदमनप्रख्यातधीकौशलः ।
किन्वेतेऽयमिवातिदुःस्थवपुषः किं वा रहस्यं तथा
दुर्ज्ञेयन्नु महात्मनासयमतः कोऽप्येषगूढश्चरी ॥४४॥

भवतु तोलनदशामनु वदनमस्य विलोकयै ।
( उत्थाय वलितमुखं पश्यन्नेव संव्यानस्खलनमभिनयम् । ) आः संव्यानम् ! बाहुक , शतांगम् । आदाय वसनमागच्छतु वार्ष्णेयः ।

**सारथिः** —— ( विहस्य । ) महाराज , क्व पतितमुत्तरीयं क्व पुनरवतारेण तदादातुमादिश्यते वार्ष्णेयः । नन्वतीत्य योजनमन्तरीयाद्वर्ततेऽसौ रथः ।

**सावित्रः** —— किंवचनसमयेनैव योजनमतीतं रथेन ? ।

**वार्ष्णेयः** —— मन्ये तदितो गोष्पदएव विदर्भाः ।

**सारथिः** —— अथकिं । शमयितव्यएव सांप्रतमसौ शतांगवेगः ।

**सावित्रः** —— ( सविस्मयम् । ) किमत्रैव विदर्भाः । अप्यापतिताः स्मइयतैव समयेन । पश्यामि यावत्परितः । ( तथा करोति । )

**सारथिः** —— आयुष्मन् , शमितएष शतांगवेगः विस्रब्धमीक्ष्यतामभितः । ( रथवेगं शमयति । )

**सावित्रः** —— ( परितोऽवलोकयन् सपरितोषम् ससमाश्वासम् । )

साधु भो सव्येष्ठस्साधु ।
नगोऽयं वृक्षोऽयं वनमिदमिदं पत्तनमिति
प्रकाशं तत्सर्वं विपुलमपि विश्वं विलसति ।
कुतोऽप्याधावन्ती स्थितिमभजतेवाऽद्य धरणी
चिराच्छून्याजातास्सपदि परिपूर्णाइव दिशः ॥ ४५ ॥

( आत्मगतम् । ) इत्थममानुषमुपकर्तुरमुष्य निष्क्रयतया करोमि कामपि कलामहमपि । ( पार्श्वस्थं बिभीतकमिर्दिशन्नेव । प्रकाशम् । ) सत्यमसि सर्वमानुषाणामुपरि । अथ पर्णान्यस्य प्रेक्षणेनैव गणयेः ।

**सारथिः** —— मन्ये तद्दूरे हि वाङ्मनसयोः । यतः ।

पांसूनपि क्षितितले गमनेऽपि ताराः
[illegible] तनौ [illegible]ऽपि पार्श्वौ ।
[illegible]

दृष्ट्वैव यो गणयिता तरुपर्णजातम् ॥ ४६ ॥

**सावित्रः** — पश्य वदानि पर्णानि कुसुमानि वा कियन्तीति । गृहाण कामपि शाखिकाम् ।

**सारथिः** — ( सकुतुकमवरोहणमाटयित्वा शाखिकामाच्छिद्य । ) आयुष्मन् उच्यतां । कत्यत्र कुसुमानि मुकुलानि प्ररोहाश्शलाटवः पर्णानि फलानि चेति ।

**सावित्रः** — ( निर्वर्ण्य । ) पश्य , पर्णान्येकोनविंशतिः प्ररोहाः षट् शलाटवएकादश , फलानि पञ्च , मुकुलानि नव , कुसुमानि पञ्चदश ।

**सारथिः** — ( गणनामभिनीय, सविस्मयम् । ) अहो गणिततत्त्वनैपुणमायुष्मतः ।( उपसृत्य सभक्तिप्रश्रयम् । ) देव , कथमिदं तदवाजिगमिषति मन :

**सावित्रः** — सूत , शृणु ;

विद्येयमक्षहृदयाभिधया प्रसिद्धा
संगृह्य याञ्च विधिवज्जपतोजनस्य ।
एनोगदश्च गरलश्च विमुच्य देहं
धावेत्सुदूरमथ सोऽपि सुधीमणिः स्यात् ॥४७

एवमनुश्रूयते हि पुराणेषु ॥ यथा ॥

शम्भोर्माध्यन्दिनिमियमगाद्वेधसं व्याघ्रपादा-
त्तस्माच्छेषं हरिमपि ततःश्रावणानर्कमेभ्यः ।
चण्डांशोस्तं यममपि ततः पैलमाद्यम्मुनीनां
षष्ट्या वर्षैः कथमपि च तामाप्तवनिास्म तस्मात् ॥ ४८ ॥

किञ्च ॥ एनामभ्यस्यतां मृत्युरिच्छामनु हि वर्तते ।
तत्सम्प्रदायगुरवश्शिवाद्यास्तन्वते शिवम् ॥ ४९ ॥

तदेषसदृशामुपकर्तुस्तव निष्क्रयतया सादरमुपदिशानि । प्रतिगृहाण य दि कुतुकम् ।

**सारथिः** — ( सतर्षहर्षमुपसृत्य विनतपूर्वकायमाबद्धाञ्जलि तिष्ठन् । ) महाभाग , अवहितोऽस्मि । ( इति कर्णमुपनयति । )

**सावित्रः** — (ध्यानमिव नाटयित्वा। कर्णे एवमिव कथयित्वा।) बाहुक, समुपदिष्टेयमखिलकलिकल्मषघ्नी विद्या। आम्नायतामन्तरेव द्विस्त्रिः।

**सारथिः** — यथाऽऽदिशति देवो गुरुश्च।

(इत्यक्षि निमील्य ध्यानन्नाटयति।)

(ततः प्रविशति नायकांगान्निस्सरन् कालिः।)

**सारथिः** — (नयनमुन्मील्य। पुरोवलोक्य।)

कोऽसौ करीषकरिकाककशेरुकाल-
कालायसाकलितकायकलापकृत्यः।
क्रूरक्रियः कुटिलकूर्चकरालकुक्षिः
कीलालकद्रुकुरलः किरतीव कालीम् ॥ १० ॥

किञ्च, कालेयरसेनेव लिंपति रसां, कालांबरेणेवावृणोत्यम्बरम्, कलिन्दनन्दिनीझरेणेव छावयति हरित्कन्दरान्, कृष्णांगारगोमयगोमुखमिवारचयत्यन्तरालं, नीलीरागेणेव रञ्जयति रविबिम्बं, तापिंछकुसुमलांछनमिव विलासयति दिवसं, ललिततमस्तमालकमिवाकलयत्यालोकम्, अर्पितमिव जलधरैः, आर्जितमिव जलधेः, आत्तमिव रसातलात्, अञ्जनपुञ्जमञ्जुलमभिभूतनिखिलरोचिरस्य किमपि शोचिः।

(इति स्तिमितमीक्षते।)

**कलिः** — (सभयकम्पमभिमुखीभूय।) देव, शरणं शरणम्।

दीनानाथशरण्य, पुण्यचरितं जानन्नपि त्वाम्मदात्-
शीलाच्चयावयितुं बहूनि यतनान्याधामहं वै कलिः। (इत्यर्धोक्ते।)

**सारथिः** — (सरोषम्।) रेजाल्म, अपि त्वमेव मम दुर्ललितदुर्दशाशतदुर्लतामूलपालिः कलिः। पश्य रे माज्ञ, सद्यशमद्यैव सभाज्यसे (शिशप्सामभिनयन्। विमृश्य स्वगतम्।) सावशेषइव वचसि वैधेयः (प्रकाशम्।) बालिश, वमावशिष्टमपि भूतार्थम्।

**कलिः** — मूढात्मैव परं गरेण महता छुष्टोऽस्मि दुष्टात्म
स्वस्यैवं स्वयमेव शिक्षणमधां-

( इत्यर्धोक्ते रुधिरवमनन्नाटयन् सगद्गदम् सबाष्पम् सप्रश्रयम् । )

——रक्ष्योऽस्म्यशिक्ष्योऽस्म्यहो ! ॥ ५१ ॥

( इति विषवमनन्नाटयन् वेपते । )

**सारथिः** — ( सदयं विहस्य स्वगतम् । ) प्रकृतिमापन्नः सस्वतएव । तस्कुतएषपुनरपि शिक्ष्यः । अनुचितमेव हि हतस्य हननम् ।( प्रकाशम् । ) मूर्ख, याहि यथाऽऽगतम् ।

**कलिः** — ( सभयदैन्यम् । सास्रम् । ) महाभाग, श्रूयताम् ।

कार्कोटकस्य भवतश्च दमस्वसुश्च
नामर्तुपर्णनृपतेरपि ये गृणान्ति ।
तेषां वपुर्गृहमथाभिजनानुताहो
हित्वा क्षणादपसरेयमिदं हि सत्यम् ॥ ५२ ॥

**सारथिः** — कले, शत्रुरपि शरणागतोरक्षणीयइति दत्ताभयोऽसि, आचर यथाप्रतिश्रुतम् । तद्गच्छ यथेच्छम् ।

**कलिः** — ( सपरितोषम् सप्रश्रयम् । ) अनुगृहीतोऽस्मि । अपसरेयमेष ततः ॥ राजन्नाश्रितदैन्यदारणपटो, पुण्यैरगण्यैस्तव
क्षोणीभर्तरि पुष्करेऽपि विजिते सर्वाः पुनस्ताः श्रियः ।
प्राप्स्यन्ते च परस्परं विरहजात्यालोचनाम्रेडित-
मीतिमोतहृदन्तरान्तरुदितात्युत्साहहल्लोहलम् ॥ ५३ ॥

**सारथिः** — ( सानुशयम् । ) कले, अमर्षवशात्किमपि प्रलपितमन्यथा मा स्म मन्यथाः । ननु भगवदिच्छामनु भवतःप्रवृत्तिः । देव क्षम्यताम्ममायमपराधः ।

अत्यल्पेऽप्यनुपप्लवोपशमिते पुण्ये कृते प्राणिना-
मुच्चैः कर्मणि वा कृतः प्रतिपदं योयच्छति स्वस्सुखम् ।
आद्यन्ताद्ययुजोऽखिलाधिकरणस्यांशोयआध्यासिकः
कालाख्यस्य च वस्तुनः प्रतिकालिं तन्त्वां करोम्यञ्जलिम् ॥ ५४ ॥

(प्रणामन्नाटयति । )

**कलिः** — राजन्, सुमुखं चिरञ्जीव । प्रविशोयमेषविभीतकमेनं यएतदा-

द्यप्रशस्ततामयेत जगति। भद्रन्ते भद्रम्। (इति यथोक्तमाचरन्नेव निष्क्रान्तः।)

**सारथिः** —(सविस्मयमात्मगतम्।) आः किमियं दैवी हेला, किमानेतर-वितमागत्य सकलमपि समीचकार भगवान्भूतभावनः कलिः। नन्वित-एव शुभान्यासन्निमित्तानि। ज्ञायतेऽस्य प्रसादेनैव पुनरावृत्तिरखिलाना-मपि सम्पदाम्। किं पुष्करएव स्वयमर्पयिता। भवतु यद्वा पश्यामि तावत्। (प्रकाशम्।) आयुष्मन्, अनुगृहीतोऽस्मि महामनूपदेशेन। अलमितोऽपि विलम्ब्य। नन्वपराचलशिखरचुम्बी भगवानम्बरमणिः।

(इत्यारुह्य रथ्यांस्तोलयति।)

**सावित्रः** — सखे बाहुक, किमद्य मुहूर्ताद्दृष्टिमन्वयदन्धकारमिव समू-ढमाधरास्त।

**सारथिः** — न जानाति देवस्तमस्काण्डएव क्रथकैशिकोपकण्ठकान्ता-रप्रान्तसमूढः।

**वार्ष्णेयः** — यद्वा स्यात्कस्यापि वनाश्रनस्य छाया।

**सावित्रः** —भवतु, बाहुक, चोदयाश्वांश्चपलम्।

**सारथिः** — आयुष्मन्, नन्विमाः क्रथकैशिककर्वटोपवनविहारवीथयः परागताः। इतइतः प्राच्यामालक्ष्यते भीमभूपसौधवीधीस्फटिकपीठिका।

(अंगुल्या निर्दिशति।)

**सावित्रः** — यत्सत्यमतिनन्दनान्युपवनानि। (इति स्तिमितमीक्षते।)

**वार्ष्णेयः** — आयुष्मन्, इदमिदं विदर्भराजधानी कुण्डिनपुरम्।

**सावित्रः** —(निर्वर्ण्य सशंकमात्मगतम्।) अये किमेतत्।

किं रथ्यागतरथ्यपादचरणामर्दाःप्ररोहत्तृणाः
किं सौधाश्च सुधाविलेपविधुराश्शैवालपूलीभृतः।
किं पौराश्च रुजा विवर्णवदनाबाष्पाम्बुधारास्रुतः
सर्वं वीक्ष्य ससंशयं मम मनः पत्रक्रियां शंकते॥ ९९॥

**वार्ष्णेयः** —(सशंकमात्मगतम्।) किं स्वयंवरे समुपस्थिते पुरमिदं दर्शनं स्यात्।

**सारथिः** — (पुरमवलोक्य स्वगतम् ।) मन्ये स्वयंवरइति स्वामिनस्सम यनमस्मानतिसन्धातुमेव ।

यतः ॥ नैव स्वयंवरइतीरयतीव खिद्य-
त्पौरव्रजं नगरमेतदुदारसत्वम् ।
प्रातस्स्वयंवरइहेत्यधुनैव देव-
इत्यस्य पत्रमपि कृत्रिममेव मन्ये ॥ १६ ॥

यद्भावि तद्भवतु ।बलवती हि भवितव्यता । यतः ।

क्लेशाः क्वापि निलीनाः कलिरपि धूतः कृतं प्रतिज्ञातम् ।
कुण्डिनमाविष्टमथो कथमिव वा संविधानमत्र विधेः ॥ १७

(प्रकाशम् ।) राजन्, किमित्यवलोक्य कुण्डिनमालोच्यते किमपि नन्वत्र द्वितीयस्स्वयंवरः । तदार्तिपुरस्कृतएव स्यादयमभ्युदयः ।

**राजा** — स्यादेव तथाऽपि । मम परमत्र महती शंका ।

**सारथिः** — अलमालोकनादेव देव शंकया, प्रविश्य पुरं परमभिज्ञा गमिष्यामः साधयामस्तावत् । (इति निष्क्रान्तास्सर्वे ।)

इति श्रीभट्टश्रीपण्डितनारायणसुदर्शनीये कलिविधूननना( )के तत्राऽष्टमोऽङ्कः । शिवाभ्यान्नमः ।

---

अथ नवमोऽङ्कः

(ततः प्रविशत्यास्थानमण्डपगतस्सह वैदर्भेण ऋतुपर्णः ।)

**ऋतुपर्णः** — (सचिन्तमात्मगतम् ।) किमद्य मे प्रतिवचः ।

स्याच्चेत्स्वयंवरविधिः किमितीह विद्ये-
देषोऽपि लेखमलिखद्यदि किन्नु पृच्छेत् ।
आयां स्वयंवरधियेत्यविभाव्यवार्ता
धर्मेतरस्य च महान्भविताऽवकाशः ॥ १ ॥

यथातथकथनमप्यातिह्रेपणम् । अनृतभाषणमप्यमीव, अकथनमप्य भ्यागतोचितम्, अपदिश्य कथनमप्याप्तजनातिसन्धानम्, तत्किं भणिष्यामि । अथ दैवं प्रमाणम् । (प्रकाशम् ।) वयस्य, त्वद्वार्तावि

मिषयैव समागतोऽस्मि । किमस्मि वच्मि । सकलमवार्तप्रायमेव प्रियमित्रवार्ताजातम् । दुरत्ययं हि दैवं नाम किमपि दारुणमपान्निधानम् ।

( इत्यनुशोचनन्निरूपयति । )

**वैदर्भः** — ( सबाष्पगद्गदम् । ) वयस्य, दुःखायैव किल जन्म भीमस्य । तत्किं महाभागोऽपि मत्सन्निधिवशादनुताम्यति । तदलमनुशोच्य दुर्भगं । क्वचिद्विश्राम्यतां चिरेण किल प्रतिषिद्धमात्मखेदानलसन्धुक्षणमित्याप्तजनानामपि दर्शनन्तदेषयाम्यभ्यन्तरमभ्यनुज्ञायै ( इत्युत्थातुमिच्छति । )

**ऋतुपर्णः** — ( सहर्षमात्मगतम् । ) तिष्ठतु तावदमुष्य तदवयस्योचितमाभाषणम् । अभिनन्दनीयमेवेदमधुना, यदेपद्रागेव निर्विचारमवमुक्तोऽस्मि अथवेदमभाषणमप्यतिमात्रखेदविक्लवतयैव । ( प्रकाशम् । ) सखे, भवतु क्वचिद्विश्रम्य परमवसरे द्रक्ष्यामि । अनुमन्यताम् ।

**वैदर्भः** — ( सगद्गदम् । ) कः कोऽत्र ।

( प्रविश्य । सभयसम्भ्रमप्रश्रयम् । )

**ऋफिडः** — [क] एसो म्हि उफिडो आणवेदु को णिओओ अणुट्ठेओ त्ति ।

**वैदर्भः** — ऋफिड, सख्युरुचितं किमप्युद्वसितमुपकार्यादि च सज्जीक्रियताम् । तत्सहैव गृह्यतां वयस्यः ।

**ऋफिडः** — [ख] जं भट्टा आणवेदि ।

**ऋतुपर्णः** — सखे साधयामि । ( इति सहऋफिडेन निष्क्रान्तः । )

**वैदर्भः** — ( दीर्घमुष्णञ्च निश्वस्य । ) आः किमियती दुरवस्था ।

न स्थातुं न च भाषितुं न मिलितुं नापि प्रयातुं क्वचि-
न्न स्वप्तुं न विलोकितुञ्च जनतामिच्छत्यहृष्टम्मनः ।
किं जागर्मि किमालपामि किमु वा निद्रामि किं प्राणिमि
प्रेक्षे किं किमुपैमि चेति निखिलं जानामि नैव स्वयम् ॥ २ ॥

---

[क] एषोऽस्मि ऋफिडः आज्ञापयतु कोनियोगोनुष्ठेयइति ।

[ख] यद्भर्ताज्ञापयति ।

किञ्च ॥ सदा संज्ञां धत्ते सिचयनिचयेनेव पिहितां
चिरादग्धं चेतः कलयति कुकूलानलइव ।
कुतश्चिच्चोदन्वानिव सृजति बाष्पांबुलहरीं
विषादः कोऽप्येषग्लपयति वपूंषि व्रणयति ॥ ३ ॥

तथाऽपि समसुखदुःखस्वजनसंविभक्तमेव दुःखममुमहमिति कथम प्यन्तरमेव गच्छामि । (शनैःस्तोकमन्तरं परिक्रम्य पुरोऽवलोक्य ।)

इहास्तं तत्रोष्णश्वसितमपरत्रार्तरटिता
न्यधोवक्त्राण्यूर्ध्वं करकमलमन्यत्र लुठितम् ।
इतीवासीद्विहं तादिह निरयस्येव जठरं
पुरा पुष्यद्घोषाविलसितलसत्प्रांगणमहो ॥ ४ ॥

तदिदमेवाभ्यन्तरं तद्यावत्प्रविशामि । (प्रवेशनाटयित्वा, विलोक्य सविषादम् ।) हन्तात्रैव मात्रे किमपि सास्त्रमावेदयन्ती मिहिरमरीचिकलितावल्लेव प्रतिपदुडुपकला केशिनीकरपंजरस्थशरीरा निखिलभुवनाविषादवल्लीमूल-पालिरालोकेनैव सुखितामनवशेषमेव दमयन्ती दमयन्ती । तदद्य प्रवेशोऽपि महीयसे विषादाय । प्रविशेयमुत न वा । (इति चिन्तयन्द्वार्येव तिष्ठति ।)

( ततः प्रविशति यथानिर्दिष्टा सह सखीभ्यामम्बया च दमयन्ती । )

**दमयन्ती** — ( सधैर्यावष्टम्भम् मात्राभिमुखीभूय सास्त्रम् । )

[ग] अंब, ण खु एत्थ अत्थि इसि वि संसओ सो जेव्व अज्जउत्तो ; अण्णह कहं से पहूदपसररोसादिरेअकासाइदलोअणकालिआकरकलिद करवालधारादारिज्जमाणसुम्भासुरप्पण्णकण्ठकण्डस्स विअ पुलोवणमेत्तसमुवत्तआदमेत्तसिदमण्णुसदमण्णुसअकुसेसअलसिअसिदकोडिसदकोडिपाडिज्जमाणपालेअसेलणिव्वुलखुड्डअपक्खतक्खणस्स विअ बहुलमारिसबाहुलेज्जबाहुकलिदकदूरसत्तिसत्तिसमासत्तिदलन्त दारुणाको

[ग] अंब, न खल्वत्रास्तीषदपि संशयस्सएवार्यपुत्रः । अन्यथा कथमस्य प्रभूतप्रसररोषातिरेककाषायितलोचनकालिकाकरकालितकरवालधारादार्यमाणसुम्भासुराप्यानकण्ठकाण्डस्येव दर्शनमात्रसमुपात्तातिमात्रशितमन्युशतमन्युशयकुशेशयलसितशितकोटिशतकोटिपात्यमानप्रालेयशैलनिस्तुलाक्षुद्रकपक्षतक्षणस्येव बहुलामर्षबाहुलेयबा

अकुम्भकुहरकोअकुहरजरढजढरपिढरपदेसस्स विअ विसहरादिवहविहरन्तवणवणसजलजलहरपडलपरोप्फरपाडिमद्दस्स विअ समुदिअराआणिसाअराणिसामणाविमुद्दसमुद्दुद्दालुढन्तलोलकल्लोलजालस्स विअ अ को वि उच्चावओ उक्कण्ठिदासिहण्डिसण्डतण्डवमण्डवप्पत्थुदमइंगमाऊरमज्जणामन्दो अमन्दो सन्दनस्स णिग्घोसो ।

अविअ कुदो मे पण्णादवअणमूलवअणरअणाणिसमणजणिदणिराअंकसंकंकुरपंकिलंतरंगो अन्तरंगरंगरिंगन्तअबहिरंगसंगदअभंगुरुक्कंठाकुण्ठअत्तणकेरअकालविसेसवेहवपिसुणपदुम्हअपरिक्खिदं अदिक्खदद्दूणदूणमलिणाणणादंसदंसणकूणिदसोणिदसोणकोणाणिराअंकणीसरन्तसासंकाणिरुद्धवाहप्पवाहपुण्णलोअणसुण्णपुलोवणं अदिविरलवण्णपदवण्णणं किं वि सगग्गअं सप्पणअं अ प्पच्चुत्तवन्तो ।

किअ कीस अ मन्दमन्दप्फन्दपत्तमन्दुरामन्दिरकन्दराए मह अ मुहअवहोभाहपवहन्तबाहओहदीह दिवहसमूहसमोहदूहमहामहसुहासिआमहासिणीए केसिणीए अत्ताणं अरुणण्णअकलससाअरकोत्थुहमाणहूदस्स अज्जमिस्सस्स अम्हकेरकवडालिहिदलेहविहिदमहकेरअउ-

---

द्दुकलितकठोरशाकिशाकिसमासस्तिदलद्दारुणाकोभकुम्भकुहरकोभकुधरजरठजठरपिठरप्रदेशस्येव विषधरदिवसविहरद्घनघनसजलजलधरपटलपरस्परपरिमर्दस्येव समुदितराकानिशाकरनिशामनोविमुद्रसमुद्रमुद्रालुठल्लोलकल्लोलजालस्येव च को ऽप्युच्चावचउत्कण्ठितशिखण्डिषण्डताण्डवमण्डपप्रस्तुतमृदंगमायूरमार्जनामन्द्रोऽमन्दः स्यन्दनस्य निर्घोषः ।

अपि च, कुतस्सपर्णादवचनमूलवचनरचनानिशमनजनितनिरातंकशंकांकुरपंकिलान्तरंगोऽन्तरंगरंगरिंगदबहिरंगसंगताभंगुरोत्कण्ठाकुण्ठितात्मीयकालविशेषवैभवपिशुनपदोच्चयपरिष्कृतमतिक्षतद्दूनद्दून मलिनाननादर्शदर्शनकूणितशोणितशोणकोणनिरातंकनिस्सरत्साशंकानिरुद्धबाष्पप्रवाहपूर्णलोचनशून्यदर्शनमतिविरलवर्णपदवर्णनं किमपि सगद्गदं सप्रणयं च प्रत्युक्तवान् ।

किञ्च किंनिमित्तञ्च मन्दमन्दस्पन्दप्राप्तमन्दुरामन्दिरकन्दरायां मम च मुखोभयपार्श्वप्रवहद्बाष्पौघदीर्घदिवससमूहसमोहदुःखमहामहसुखासिकासहासिन्यां केशिन्यां आत्मानमरुणान्वयकलशसागरकौस्तुभमणिभूतस्यार्यमिश्रस्यास्मत्कपटालिखितलेखवि-

णोविवाहदीहमोहसंहिदसअँव्वरसअवधावणाडव्वँरस्स अदिकुदुअवुण्ण
स्स उदुवण्णस्स साराहिं, अण्णं अ सुण्णपुण्णाणिसहेसविहवकहापहा
णिविक्खणतक्खणुज्झिअणिसहजणत्तअपण्हेअं वण्हेअं वण्णअमाणो
वट्टाणुवट्टिआए वले अवले कहं सो मुणइ कहं वा अण्णे जाणन्दि से
मई एव्व मुणइ से अ कहं से पुरिसो विअ वेत्ति त्ति म्हरणजणिददीह
दीहणिसासमसूसन्तदन्तंसुअं संससमाणो असमाणाए इमाए अत्तो अव
सरोत्ति अणुवदं अहिहिज्जमाणं अज्ज अहिदुरवगाहगहणहिअ
अअअं ण णवर तरुणी असरणीकिदा . सृणवि इमिणा णिअणाहेण
णिउत्तद्धकडिपडच्चरं पडिच्चत्ता कहं वि णवरि विहिणा विअ आउ
अभवणं वेअ आविदा तदो वि अणुज्झिअदइआणुराआ तदादि एक्के
णीधरा मुत्तमल्लमलअजाणुलेवणा अणिट्ठण्णाणपाणासणुववणविहर
णगोट्ठीभासणहसणखेलणादिविब्भमा भंदेव्व अणवरदथ्थण्डिल्ललुट
न्नमलिणमुहकमलोअरणीसरन्तअस्सवस्सपादपंकिल पस्सघरप्पंगण
अंगणाजणदुद्दंसदुद्दसाउला पुलोविज्जइ असमणंसिणी व्व तवंसिणी म
ह वअस्सा दमअन्ती त्ति दुम्मआए उत्तन्दं आअण्णअन्तो पेंखोलन्त
णअणसलिलोलावणाहिलासेण केण वि ओदेसेण अण्णदो दिण्णदिट्ठि

---

हितमदीयपुनर्विवाहदीर्घमोहसंभृतस्वयंवरसजवधावनाडम्बरस्यातिकुतुकपूर्णस्य ऋतुप
र्णस्य सारथिमन्यश्च शून्यपुण्यनिषेधशविभवकथाप्रहाणिविक्षणतत्क्षणोज्झितनिषध
नपदपार्ष्णेयं वार्ष्णेयं वर्णयमानोवार्तानुवार्तिकया, अयि, अबले, कथं स जानाति क
वाऽन्ये जानन्ति; अस्य कथमस्य सतेव जानात्यस्याश्च कथमस्याः पुरुषएव वेत्ती
ति स्मरणजनितदीर्घदीर्घनिश्वासशुष्यद्दन्तांशुकं शंसन्नसमानयाऽनयाऽऽत्तोऽवसरइत्य
नुपदमभिधीयमानमयि, अधिदुरवगाहगहनहृदयमदयं न केवलं तरुण्यशरणीकृता धि
ग्विपरीतमनेन निजनाथेन निकृत्तार्धकटिपटच्चरं परित्यक्ता कथमप्यनन्तरं विधिनेव
पुनःभवनमेवापिता ततोऽप्यनुज्झितदयितानुरागा तदाद्येकवेणीधरा मुक्तमाल्यमलय
जानुलेपनाऽनिष्टस्नानपानाशनोपवनाविहरणगोष्ठीभाषणहसनखेलनादिविभ्रमा भ्रान्ते
वानवरतस्थण्डिललुठन्मलिनमुखकमलोदरनिस्सरदस्रवर्षपातपंकिलपार्श्वगृहप्रांगणां
गनाजनदुर्दर्शदुर्दशाकुला दृश्यते अमनस्विनीव तपस्विनी मम वयस्या दमयन्तीति दु
र्भगायात्तु तान्तमाकर्णयन् प्रेंखोलन्नयनसलिलापलापनाभिलाषेण केनाप्यपदेशेनान्यतो

अ आसी ।

अण्णं अ सो उदुवण्णओअणिओ त्ति से अस्साणणेउणं परिस्खिदुं पहिदाए अप्पहिदाए अ एदाए, हीमाणहे ! सहि, से चरिअं अ चरिदचरं अदिठ्ठचरं अस्सुदपुव्वं अमुणिदपुव्वं अमाणुसं अ दीसइ हुं सो को वि केअवी देव्वो जं जरढकिसलअसरिसेण करदलेण विइण्णे अणिन्धणाणुबन्धणस्स अमुहमारुदधमणिधमणादिधुस्खणरुखणस्स अ छुल्लिविवरस्स मज्झे विइण्णे तण्णे उअ जिण्णपण्णे सअं वेअ कुदो वि पावएण प्पज्जालिदे अणाअलिदसलिलस्खालणस्समस्स आआरो त्ति णवर उवरि प्पडिठ्ठिदस्स पललपअणकुण्डस्स कुस्खिम्मि सअं विअ जावअहिलसिदं दाव दिव्वजिव्वणीअपूरो उग्गमिअ सअलं वि पललं पएलिमं कुणइ । ण सो णिस्खिवइ लोणं ण सो ओकिरइ सिदं अम्हहे अइमहुरं अमुदस्सादु अ जं जंगलंति वअणरअणपुव्वं दिण्णम्मि अज्जउत्तकरपक्कपिसिदस्सादिमा जरीजम्भइ ।

अविअ कस्स उण अण्णस्स करदलमिदिदं वि कुसुमजादं जहपुरं अपरिच्चत्तसोहग्गं अपरिकिलिठ्ठसुरहिभरं अहिणवं व होज्ज ।

अवरं अ केसिणीसहगदं अपच्चजुअलं आलोइदमेत्तेण अदिमेत्त-

---

दत्तदृष्टिश्चासीत् ।

अन्यच्च सक्तुपर्णोदनिकऽन्यस्याशाणनैपुणं परीक्षितुं प्रहितयाऽऽत्महितयाचैतया, अहो, सख्यस्य चरितमचरितचरमदृष्टचरमश्रुतपूर्वमननुतपूर्वममानुषञ्च दृश्यते हुं सकोपि कैतवी देवोयज्जरठकिसलयसदृशेन करतलेन विकीर्णेऽनिन्धनानुबन्धनस्यामुखमारुतधमनीधमनादिधुक्षणक्षणस्य च चुल्लिविवरस्य मध्ये वितीर्णे तार्णे उत जीर्णपर्णे स्वयमेव कुतोपि पावकेन प्रज्वलितेनाकलितसलिलक्षालनश्रमस्याचारइति केवलमुपरि प्रतिष्ठितस्य पललपचनकुण्डस्य कुक्षौ स्वयमिव यावदाभिलषितं तावद्दिव्यजीवनीयपूरउद्गम्य सकलमपि पललं पचेलिमं कुरुते न सनिक्षिपति लवणं न सौवकिरति सितामहो ! अतिमधुरममृतस्वादु च यज्जांगलमिति वचनरचनपूर्वन्दत्तआमिषे आर्यपुत्रकरपक्वपिशितस्यादिमा जरीजृम्भते ।

अपि च कस्य पुनरन्यस्य करतलमृदितमपि कुसुमजातं यथापुरमपरित्यक्तसौभाग्यमपरिक्लिष्टसुरभिभरमभिनवमिव भवेत् ।

अपरश्च केशिनीसहगतमपत्ययुगलमालोकितमात्रेणातिमात्रजृंभितादरं बाष्पजल

णिमिआअरं बाहजललुलिदलोअणं अदिवेलविसादसिढिलसिढिलपदं वच्छ वच्छेत्ति कलिदेक्कामन्दणं आगेण्हिय उवलालअन्तो अस्सुकालणं पुच्छन्तीए प्पण्णाए प्पिअवअस्साए पुव्वं जेव्व एव्वं अत्तणो विदेणिं अवच्चाइं सन्दि म्ह त्ति कहिअ हरिसकण्डइदणू वच्छा आलिंगिअ किं पि सासंकं अअत्तगदं मुहुत्तमेत्तं अणुझाअ अणुवदं सरोसं विअ वले अलाहि तरुणीए तुह उणो उणो एत्थ आअमणेण ? जं क्खु संकप्फदं होज्ज जाउ जणाण त्ति व्वाहारिअ अविलम्बं ओसरात्ति णं विसज्जिदवन्तो सो । ता एत्थ कुदो मे सा संका कीस अ सो अवच्चसिणेहो ।

ता किं बहुणा तस्सिं साणुराअं एदं मह माणसं एव्व प्पमाणम् । जं सो तेअ अज्जउत्तो त्ति । मे आआरविआरकारणं परं अहिसमक्खं जेव्व अणुजोअणिज्जं । ता अणुपदं णं एत्थ आणेदु, आदु मं तत्थ णेदु अंबा । (इति शीर्षमुण्णं निश्वसिति ।)

वैदर्भः—(निशम्य सविस्मयम् ।) किं ऋतुपर्णस्य सारूप्यमावहति सार्वभौमः अवेद्यवैभवा हि विधिविलासाः दिष्ट्या हि सकुण्डिनपुरमामण्डयति । ततस्तदानयनं तनयया संयोजनञ्चेति सकलमोपत्करमेव । तदेनमानाय्य प्रवेश्यचाभ्यन्तरमभिमुखप्रलापप्रशान्तशोकावेगयोर्वधूवरयोराननमुपमामुद्दिश्य कथममि चिरखेदखिन्नमात्मानमामोदायिष्ये ।

(इति निष्क्रान्तः ।)

---

लुलितलोचनमतिवेलविषादशीथिलशीथिलपदं वत्स वत्सेति कलितकामक्षणमागृह्य उपलालयन्नश्रुकारणं पृच्छन्त्यां प्राज्ञायां प्रियवयस्यायां पूर्वमेवैवमात्मनोपि द्वे अपत्ये स्तः स्मेति कथयित्वा हर्षकण्टकिततनुर्वत्सावाऽऽलिङ्ग्य किमपि साशंकमात्मगतं मुहूर्तमात्रमनुध्यायानुपदं सरोषमिवापि, अलं तरुण्यास्तव पुनः पुनरत्रागमनेन यत्खलु शंकास्पदं भवेज्जातु जनानामिति व्याहृत्याविलम्बमपसरेति मन्त्रेनां विसर्जितवान्सः । तदत्र कुतोस्य सा शंका किंनिमित्तश्च सोपत्यस्नेहः ।

तात्किं बहुना, तस्मिन्त्सानुरागमेतन्मम मानसमेव प्रमाणम् । यत्सएवार्यपुत्रइति । अथाकारविकारकारणं परमाधिसमक्षमेवानुयोजनीयम् । तदनुपदमेनमत्रानयतु, अथवा मां तत्र नयत्वम्बा ।

**माता** — (सविषादम्।) [घ] वच्छे, मा म्ह प्पसूस भिसं खणादु वेअ इमिआ णं एथ्थ आणेम्हि तं पि पेक्ख । (सत्वरमुत्थाय परिवृत्य।) ण को वि एथ्थ प्पेस्सो कं पि पेसिअ तदो आअमिस्सं ।

(इति प्रेक्षणमन्तर्भवयन्त्येव निष्क्रान्ता।)

**दमयन्ती** — [ङ] हला केसिणि, अंबाए वि मह वअणं वेअणावहं त्ति प्पडिहाइ । मू मन्दहाइणीए मह जीविदम् । (अश्रूणि मुञ्चति।)

**केशिनी** — [च] हला मा रोद अइरा आणेस्सइ तुह पस्सपूरं णिसहेस्सरम् ।

(ततः प्रविशति सचिन्तमवनतमुखो बाहुकः।)

**बाहुकः** — (साशङ्कं स्वगतम्।) किमकाण्डे विदर्भमहिषी मां दिदृक्षते । मन्ये दुरीक्षधूमायमानमदुदन्तलेखावलोकनलालसानामासां केशिनीनाम काशिका समभवत् । तत्किमेपकुर्याम् । यतः ।

इदं रूपं दृष्ट्वा किमिव परिशुष्येत्प्रियतमा
प्रियां वा विश्लेषग्लपिततनुमीक्षेय च कथम् ।
विनोन्नामं वक्त्रं सपदि दधता साश्रु च मया
कथं वा श्रोष्यन्तां कटुवचनजातानि सुदृशाम् ॥ ९ ॥

यद्भावि तद्भवतु । इदमिदमभ्यन्तरं प्रविशामि यावत् । (स्मृतिमभिनीय।)

पुरा प्राप्ते ऽस्मिन्त्सजवपरिधावत्परिजनं
कदा देवोदेशादिति सकुतुकालापिललनम् ।
भवत्यानन्दानां खनिरिव यदभ्यन्तरमिदं
तदेवास्मं सास्त्रं सविरति च तेनैव निभृतम् ॥ ६ ॥

(सशंकं मन्दप्रक्रमं प्रवेशं नाटयति।)

---

[घ] वत्से, मा स्म प्रशुष्य भृशं क्षणादेवैयमेनमत्रानयामि तदपि पश्य । न कोऽप्यत्र प्रेष्यः कमपि प्रेष्य ततआगमिष्यामि ।

[ङ] हलाकेशिनि, अम्बाया अपि मम वचनं वेदनावहमिति प्रतिभाति । धिङ् मन्दभागिन्या मम जीवितम् ।

[च] हला मारोदिहि आचिरादानेष्यति तव पार्श्वपूरं निषधेश्वरम् ।

**केशिनी** — (निर्वर्ण्य सहर्षम्।) [छ] हला विहादा दे विसाअरअणी। आअदो प्पियो । उट्ठेहि पेक्ख अ से आअमणसेह्लिम् ।

**दमयन्ती** — (निर्वर्ण्य सौत्सुक्यम्।) [ज] हला किं उवहासो आदु (इत्युत्तिष्ठन्त्येवार्धोक्ते बाहुकमवलोक्य। सविस्मयविषादम्।) किं एव्वं अवज्जाकिदो अज्जउत्तो वि । (दीर्घमुष्णंनिश्वसिति।)

**बाहुकः** — (निर्वर्ण्य सास्रम्।) हा दैव, किमियताऽपि नावसितमत्र तव दुर्विलसितम् । यदिह प्रभाविधुरां प्रियामेव मामीदृशमनयस्त्वमनयः ।

कथमलज्जमसूमवलोकये
कथमयान्यथवा तदुपान्तिकम् ।
कथमहो ! परिदृष्टमनु ब्रुवे
कथमसुर्मम नोत्पतिता क्षणात् ॥ ७ ॥

हा महादेव हा नीलकण्ठ । (इति विषादस्तम्भमनाटयति।)

**केशिनी** — (विलोक्य सानुकम्पम्।) [झ] हला दमअन्ति, दिट्ठमत्तेण कलिदणिहिलम्हरणजणिदसविसेसविसाओ विट्ठद्धो विअ तवस्सी महाराओ। ता णं उवसप्पम्ह सईजणोइदं अम्हे वेअ। एहि उवसरम्ह ।

(बाहुमवलम्ब्योत्थापयति।)

**दमयन्ती** — (सव्यथम्।) [ञ] हला केसिणि, अहं पि इमादु अहिअदरं विसादविट्ठद्धम्हि । ता मं करपंजरगदं जेव्व णेदु प्पिअदमसमीवं प्पिअसही । (सखीकरमवलम्ब्योत्तिष्ठति।)

**केशिनी** — [ट] होदु गच्छम्ह । (यथादिष्टं कुर्वन्त्युपसृत्य।)

---

[छ] हला विभाता ते विषादरजनी । आगतः प्रियः उत्तिष्ठ पश्य चास्यागमनशैलीं ।

[ज] हला किमुपहासोऽथवा — किमेवमवज्ञाकृतिरार्यपुत्रोऽपि ।

[झ] हला दमयन्ति, दृष्टमात्रेण कलितनिखिलस्मरणजनितसविशेषविषादोविष्टब्ध इव तपस्वी महाराजः । तदेनमुपसर्पाव सतीजनोचितमावामेव । एह्युपसरावः ।

[ञ] हला केशिनि, अहमप्यस्मादधिकतरं विषादविष्टब्धाऽस्मि । तन्मां करपञ्जरगतामेव नयतु प्रियतमसमीपं प्रियसखी ।

[ट] भवतु गच्छाव । जयतु जयतु महाराजः प्रियाप्रियसखी केशिनी प्रणमामि।

(तां भूमौ विसृज्य।) जेदु जेदु महाराओ प्पिआप्पिअसही केसिणी प्पणमामि। (प्रणामन्नाटयन्त्येव।) पेक्खदु प्पहू प्पिआ दमअन्ती प्पणमइ।
(दमयन्तीं निर्दिशति।)

**दमयन्ती** — (सास्रमुत्थाय) [ठ] प्पणमम्हि पाणप्पिअस्स वि अप्पिअचरिददाए वेअ निहिलभुवणपरिच्चत्ता अमन्दभग्गा वि मन्दभग्गासमुच्चरणमेत्तदुरिदविदरणचणणामहेआ णिप्फलरुव्वहेआ अ हेआ दमअन्ती। (इति क्षितितलनिहितजानुकरकमला प्रणमति।)

**बाहुकः** — (निर्वर्ण्य निशम्य सखेदमात्मगतम्।) नन्वारम्भएव वचांसि सूचीयंति स्वान्तवज्रस्य। मन्ये हन्त! मम कृते पुनरपि हालाहलोद्भवसमयः समापततीति। तत्किमद्य विदध्याम्। कथञ्चिदात्मनः परिहाराय यतिष्ये। परमत्र निमित्तमखिलजगन्निमित्तमार्याजानिरेव।
(प्रकाशम्।) भद्रे, किमिति मान्दुरिकोऽवहेल्यते। कोवा महाराजःकिमेवमेव भविता तादृशपदभाजनम्। अस्तु तस्यैषप्रणामोयस्सम्प्रति महाराजः। (इति किञ्चिदिवापसृत्य तिष्ठति।)

**केशिनी** — (उत्थाय बद्धाञ्जलिः।) [ड] महाराअ, अलं एदिणा ओदेसेण, णं तुमं सि ण्णादो सलोत्थअं विअ चोरो साहिण्णाणं सो णिसहेसो त्ति।

**बाहुकः** — (निशम्य किञ्चिद्रूक्षमिव।) किं ज्ञातेनाज्ञातेन वा मया। यद्यस्ति किमपि कथ्यताम् यदत्र मामनीनयतम्।

**दमयन्ती** —
(सास्रमुत्थाय, स्तम्भशायितैककरदत्तानना परेण करेण सखीं घट्टयति।)

**केशिनी** — ओम्। (इति बाहुकाभिमुखीभूय साञ्जलिबन्धम्।) [ढ] महा-

---

पश्यतु प्रभुः प्रिया दमयन्ती च प्रणमति।
[ठ] प्रणमामि प्राणप्रियस्याप्यप्रियचरिततयैव निखिलभुवनपरित्यक्ता अमन्दभग्ना-(भाग्या)ऽपि मन्दभाग्या समुच्चरणमात्रदुरितवितरणचणनामधेया निष्फलरूपधेया च हेया दमयन्ती।

राअ, मह सही मह विअ खु मुहेण किं पि महाराअं विण्णवेदि। तत्थ अ धम्माधम्मविवेअणं कुणन्तु भवन्दो धम्माधिओ। (इति याच्ञाम् अभिनयति।)

**वाहुकः** — (आत्मगतम्।) सर्वमप्यस्मदनुषक्तमेव स्यात्। आस्तां कथमपि समाधीयते। (प्रकाशम्।) कथ्यतामनवशेषं यत्रास्माकं स्मर्तृत्वमुपकल्प्यते।

**केशिनी** — [ण] सुणोदु महाराओ, जं इर पुरा अविण्णादकुसुम्भादिपुरिसाणुराअविलसिदे असंपुण्णमणहरलीलाविलासविच्छित्तिविब्भमकिलिकिञ्चिदमोट्टाइदकुट्टमिदविब्बोअललिदविहिदसरिसकलगत्ताणुहावे असिक्खिदालावविलावसंलावप्पलावाणुलावोवलावसन्देसादिदेसणिद्देसावदेसव्ववदेसुव्वदेसरूवभासाणुहावे अपरिइदरीदिवुत्तिप्पवुत्तिप्पहुदिबुद्धिअणुहावे अपरिसीलिदभावहावकन्तिदित्तिहेलासोहाप्पअब्भमहुरधीरूदारत्तणादिचित्तजाणुहावे असंत्थुदम्हिदहसिदविहसिदुव्वहसिदावहसिदादिहसिदविहाविहाणे पिअसहीजणसहखेलणमेत्तकलिदाअरे णिअंगसंखारमेत्तसददणिरदे अणवगदगुरुलहुप्पहुदिमाणविआणे अणाअण्णिदपिअउवलालणमअणदेव अच्चणूसवप्पमदवणविहरणकुसुमावचअ गोट्ठीबन्धहोल्लाअहेल्लाअणु-

---

[ड] महाराज, अलमेतेनापदेशेन, ननु त्वमसि ज्ञातः सन्नोऽत्रकामिव चास्माभिज्ञानं सन्निधेशइति।

[ढ] महाराज, मम सखी ममैव खलु मुखेन किमपि महाराजं विज्ञापयति। तत्र च धर्माधर्मविवेचनं कुर्वन्तु भवन्तो धर्माधियः।

[ण] शृणोतु महाराजः, यत्किल पुरा, अविज्ञातकुसुम्भादिपुरुषानुरागविलसिते असम्पूर्णमनोहरलीलाविलासविच्छित्तिविभ्रमकिलकिञ्चितमोट्टायितकुट्टमितबिब्बोकललिताविहृतसदृशसकलगात्रानुभावे अशिक्षितालापविलापसंलापप्रलापानुलापोपलापसन्देशातिदेशनिर्देशापदेशव्यपदेशोपदेशरूपस्वभाषानुभावे अपरिचितरीतिवृत्तिप्रवृत्तिप्रभृतिबुद्ध्यनुभावे अपरिशीलितभावहावकान्तिदीप्तिहेलाशोभाप्रगल्भमधुरधीरोदारत्वादिचित्तजानुभावे असंस्तुतस्मितहसितविहसितोपहसितापहसितातिहसितविधाविधाने प्रियसखीजनसहखेलनमात्रकलितादरे निजांगसंस्कारमात्रसततनिरते अनाघ्रातगुरुलघुप्रभृतिमानविताने अनाकर्णितप्रियोपलालनमदन-

अकोल्लाहलहल्लोहलजोण्णाविहारजलकीडादिजुवइजणसाहारणविला-
से अणवगअत्तणकेरअसरीरसेज्जापेरंतकेलीघरादिमुहूमुहूपसाहण-
पाणप्पिअसप्पणअसंपक्कमणोरहमणणपिअवअस्साविणोअणदूईणिओ-
अणपिआहिगमणमग्गाविक्खाप्पहुदिवासअसाज्जिआसज्जणे अदि-
ट्ठणिरवराहणाहसमाअमसमआणाअमणजणिद पज्जूसुअत्तणसन्दाववे-
वहुबवूसाअणअरइबाहमोक्खणिआवथ्थाकहणादिकिदिकोसले अणणु-
हूदसंकेदकप्पणप्पिअदमवि प्पलंभवम्महप्पमहणणिव्वेदचिन्ताखेददी-
णत्तणबाहणीसासमुच्छादिविआरवारे अणदिवाहिदप्पणइसमाअम-
समअसमुल्लंघणसवत्तिणीभोअसहसुरदंकविहादाअमणदंसणजणिदब्भम-
माप्फुडालावमोण्णादिदूहदुद्दिणे अणासादिदाहिसहीसमूहणाहप्प-
णमणणिरसणपच्छातावस्सन्दिसद्धसमुहूप्पलवणादिप्पआरे असोढ-
पिअविरहदिवहदीहमोहजाअरकिसत्तणाणिमि त्तावलोअणमलिणत्तणा-
णवठ्ठाणअणिससेज्जाणिसेवणजडत्तणचिन्तादिविक्किए अक्खुण्ण-
अणण्णअसराहिवादचोदिअणिअणाहाहिसरणमग्गे असंभिददूइआ-
दिसहाअसामग्गिव्वए अमुणिदणाअअलक्खणे इसिचवलणेत्तन्दे
असमग्गारुणाहरे समुदिदलवणिमुब्भेअरामणिज्जए मणंअंकुरिद-

---

देवतार्चनोत्सवप्रमदवनविहरणकुसुमापचयगोष्ठीबन्धहोलाकहेलाकद्यूतकोलाहलहल्लोह-
लज्योत्स्नाविहारजलक्रीडादियुवतिजनसाधारणविलासे अनवगतात्मीयशरीरशय्या-
पर्यन्तकेलीगृहादिमुहुर्मुहुःप्रसाधनप्राणप्रियसप्रणयसंपर्कमनोरथमननप्रियवयस्याविनोद-
नदूतीनियोजनप्रियाभिगमनमार्गवीक्षाप्रभृतिवासकसज्जिकासज्जने अदृष्टनिरपराधनाथ
समागमसमयानागमनजनितपर्युत्सुकत्वसन्तापवेपथु वपुस्सादनारतिबाष्पमोक्षनिजाव-
स्थाकथनादिकृतिकौशले अननुभूतसंकेतकल्पनाप्रियतमविप्रलम्भमन्मथप्रमथननि-
र्वेदचिन्ताखेददैन्यबाष्पनिश्वासमूर्च्छादिविकारवारे अनतिवाहितप्रणयिसमागमसम-
यसमुल्लंघनसपत्नीभोगसहसुरतांकविभातागमनदर्शनजनितभ्रमास्फुटालापमौनादिदुः-
खदुर्दिने अनास्वादिताधिसखीसमूहनाथप्रणमननिरसनपश्चात्तापश्रांतिसाध्वसमुहुः-
प्रलपनादिप्रकारे असोढप्रियविरहदिवसदीर्घदीर्घमोहजागरकार्श्यनिमित्तावलोकन-
मालिन्यानवस्थानानिशशय्यानिषेवणजाड्यचिन्तादिविक्रिये अक्षुण्णानन्यजशरा-
भिघातचोदितनिजनाथाभिसरणमार्गे असम्भृतदूतिकादिसहायसामग्रीव्रजे अज्ञा-
तनायकलक्षणे ईषच्चपलनेत्रान्ते असमग्रारुणाधरे समुदितलावण्योद्भेदरामणीयके

कुअकोरए अणदिपरिप्फुडंगसंधिए अग्गिमम्मि विअ वअम्मि वट्ट
माणे अहिणवसालभंजिआसमदसे इमस्सिं जणे कहं पि से कं
तरंसिणा हंसेण सन्देसं पेसिअ परवसीकदुअ अ से माणसं उण
किं वि देव्वदासत्तणं विअ प्पदंसिअ कलुसीकदुअ वि अविस्संसणि
ज्जं तं प्पडिविलोडिअ प्पडिट्ठाविदं विअ दिढदरं आदरं मुणन्त
वीससिअ वेअ सअंवरेण ससपस्सं णीदवन्तो को वि णम् ।
तदो वि कुदो वि फन्दे वि मिलाणी त्ति पलावे वि वत्तवेअणेत्ति प
रिहाणे वि पाणिपीडेत्ति परिलेवणे वि पल्लवंगुलिव्वहेत्ति परिमण्ड
वि ववूभारो त्ति जलक्कीडाए वि जलभारूअओत्ति कन्दुकलीलाए
कडिभंगोत्ति वणविहरणे वि वादसीइणत्ति आदवसेवणे वि अंगस
न्दावो त्ति जोण्हाविहरणे वि पित्तप्पओओ त्ति कुसुमावअए वि क
रक्खदीत्ति कुवेरक्खलीलाए वि कण्ठजाअणेत्ति कंचुलीधारणे
कुअमूलमालिणत्तणं त्ति कोसेअवसणे वि कडपरिस्समो त्ति रसणाि
वेसे वि जहणदूसणं त्ति वेणीविहाणे वि वालविच्छित्ती त्ति तिलअ
भरणे वि अलिअंकणं त्ति पत्तलेहे वि कवोलकंदिणासो त्ति उत्तंसवि
ण्णासे वि कण्णसिक्खेत्ति सहीदंसणे वि सअललाहवुप्पत्ती त्ति ग

---

मनागंकुरितकुचकोरके अनतिपरिस्फुटांगसन्धिके अग्रिमएव वयसि वर्तमा
अभिनवसालभञ्जिकासमदशेऽस्मिन् जने कथमप्यस्मै कमपि तरस्विना हंसेन
देशं प्रेष्य परवशीकृत्य चास्य मानसं पुनरपि किमपि दैवदास्यमिव प्रदर्श्य कलु
कृत्याप्यविस्रंसनीयं तं प्रतिविलोड्य प्रतिष्ठापितामिव दृढतरमादरं जानन् विश्वस
स्वयंवरेण स्वपार्श्वं नीतवान् कोप्येनाम् ।
ततोऽपि कुतोऽपि स्पन्देऽपि म्लानिरिति प्रलापेऽपि वक्त्रवेदनेति परिधानेपि
णिपीडेति परिलेपनेऽपि पल्लवांगुलिव्यथेति परिमण्डनेऽपि वपुर्भारइति जलक्री
यामपि जलभारोदयइति कन्दुकलीलायामपि कटिभंगइति वनविहरणेपि वात
तिकेति आतपसेवनेप्यंगसन्तापइति ज्योत्स्नाविहरणेपि पित्तप्रकोपइति कुसुम
चयेपि करक्षतिरिति कुबेराक्षलीलायामपि कण्ठयातनेति कञ्चुलीधारणेपि कु
मूलमालिन्यमिति कौशेयवसनेपि कटपरिश्रमइति रसनानिवेशेपि जघनदूषण
वेणीविधानेपि वालविच्छित्तिरिति तिलकभरणेप्यलिकांकनमिति पत्रलेखेपि क
लकान्तिनाशइति उत्तंसविन्यासेपि कर्णशिक्षेति सखीदर्शनेपि सकललाघवोत्प

ट्ठीगमणे वि दिट्ठिदोसो त्ति ण किं पि कन्दाजम्मसाहारणं कम्मकरणं कादुं अणुमण्णन्तो अदिलहु णिहुवणं वि से अमाणुसं अदिस्समजणअं व्वाआमं कलेन्तो मालइं व्व महुअरो फंसिदाप्फंसिदं वेअ अणुभुञ्जन्तो करेण वि पम्हणे व्व अच्छादिअ पालअन्तो देहेण विहिण्णं वि हिअएण एक्कं गदं चिन्तअन्तो मज्झाअदं वि सहअं विअ समुईक्खन्तो खणं वि से विरहं ण सासही सददं पि णं णं करपञ्जरगदं वेअ वावही अण्णदो ण कुह वि स्सअं चाअली सइ वि से मोहन्धआरम्मि वेअ पावई अप्पाइदप्पणओ पणइजणो व्व कं वि कालं उवलालणं अहिणीअ से अवच्चजुअलं पि उप्पादिदवन्तो ।

परं अ अदिप्पआसो व्व णिव्वाणस्स दिव्वाणं अदिब्भमोव्व पडणस्स भमरआणं अच्चाडम्बरोव्व दुग्गइणो धणिआणं अदिविरावो विअ विलअस्स वरिसाहूणं अदिस्सुदिस्सरो व्व गग्गदस्स गाअआणं अदिप्पणओ वेरस्स कप्पइत्ति प्पआणं किंवअन्तिं अ सच्चावअन्तो सावच्चं वेअ णं णं जूअलीलाकोल्लाहलहल्लोहलेण ग्गहीकादुं ओदेसदो विअ ओआसं उप्पाअअन्तो कहं पि इमाए अण्णदो णिज्जमाणो परिवज्जिअ भवणं वणं अ ओगाहमाणो णं णं तहविहसुहावत्थाणं अहिगहणं अक्खन्दिदद्धवसणं अ अणण्णसरणं अणुराअमेत्तकिद-

रिति गोष्ठीगमनेपि दृष्टिदोषइति न किमपि कान्ताजन्मसाधारणं कर्मकरणं कर्तुमनुमन्यमानः, अतिलघुनिधुवनमप्यस्या अमानुषमतिश्रमजनकं व्यायाममाकलयन् मालतीमिव मधुकरस्स्पृष्टास्पृष्टमेवानुभुञ्जन् करेणापि पक्ष्मणेवाच्छाद्य पालयन् देहेन विभिन्नामपि हृदयनैक्यं गतां चिन्तयन् मध्यागतामपि सहजामिव समुदीक्षमाणः क्षणमप्यस्याविरहं न सासहिः अन्यतोन क्वापि स्वयं चाचलिः सदाप्यस्यामोहान्धकारएव पापतिः अप्राकृतप्रणयः प्रणयीव कमपि कालमुपलालनमभिनीयास्यामपत्ययुगलमप्युत्पादितवान् । परश्चातिप्रकाशइव निर्वाणाय दीपानां अतिभ्रमणमिव पतनाय भ्रमरकाणामत्याडम्बरइव दुर्गतये धनिकानामतिविरावइव विलयाय वर्षाभ्वामतिश्रुतिस्वरइव गद्गदाय गायकानां अतिप्रणयोवैराय कल्पतइति प्रजानां किंवदन्तीञ्च सत्यापयन् सापत्यामेव नन्वेनां द्यूतलीलाकोलाहलहल्लोहलेन ग्लहीकर्तुमपदेशतएवावकाशमुत्पादयन् कथमप्यनयान्यतोनीयमानः परिवर्ज्य भवनं वनञ्चावगाहमानो नन्वेनां तथाविधसुखावस्थानामधिगहनमास्कन्दिताधवसनञ्चानन्यशरणामनुरागमात्र-

वीसासं अअरुणं वेअ सो उज्झिअ कुदो त्ति पलाइदो । किणो ण सो वीसासघाअणं णाम महन्तं पाअअं । भणादु भवं धम्ममग्गदो वि ण प्पमाओ सो त्ति ।

**बाहुकः** — (निशम्य सव्यथं स्वगतम्।) वक्तव्यमेवाद्य प्रष्ट्रचै सकलमपि । (प्रकाशम्।) भद्रे, अलमपदिश्य कथनेन । श्रूयतां श्रोतव्यम् ।

यत्किल ॥ सत्यैव सा मम विधा प्रणयस्य तस्यां
साऽप्यप्रियं न किमपि व्यतनोत्सती मे ।
नाप्यच्यवं सुचरितान्नच साप्यनाथा
तेने मयैव गहने कलिरत्र हेतुः ॥ ८ ॥

येनैव सर्वसौभाग्यहानन्नः ।
भूरप्यमोचि दयितेव चिरानुरक्ता
वर्ष्माप्यदंशि रुजया भुजगाशिषेव ।
अंगैरभारि खरता विषकण्णिकेव
व्यस्पष्टि राज्ञइव तस्य कलेश्च नैघ्नचम् ॥ ९ ॥

तथा हि निसर्गस्सर्गस्य । यत्कलिपरिभवान्महान्तोऽपि धर्म्यात्पथः प्रच्यवन्तीति ।

कलौ साक्षात्कुर्वत्यखिलमपि भूमण्डलमिदं
परित्यक्तप्रायां प्रकृतिमथ धर्म्यां प्रथयति ।
प्रविष्टे साटोपं वनमहिषयूथे किमु सरः
समासीदद्वाजिप्रकरपरिवीतं क्षणमपि ॥ १० ॥

तथा हि ॥ दैवं निन्दति सद्गुरून्विसृजति प्राप्नोति वर्णान्तरं
नास्तिक्यं भजते यथामति चरत्यूढाः पुनर्विन्दति ।
अत्ति क्रव्यमतस्सुराञ्च पिबति स्वैरम्मतं कल्पय-
त्याकर्षत्यपरानपि द्विजगणोऽप्यस्मिन्कलौ जृंभिते ॥ ११ ॥

---

कृतविश्वासामकरुणमेव सउज्झित्वा कुतोपि पलायितः । किन्नतद्विश्वासघातनन्नाम महत्पातकम् । भणतु भवान्धर्ममार्गतोपि न प्रमादस्सइति ।

किञ्च ॥ आचण्डालमतारतम्यकलनं गोष्ठी जनैर्बध्यते
राजानश्च मिषैः श्रियं प्रकृतिजामाहर्तुमेवोद्यताः ।
चाटानां कुलटाजनस्य च मुदं पुष्णन्ति नीतिक्रमाः
उत्पाताश्च षडीतयश्च भुवने सर्वात्मना संस्थिताः ॥ १२ ॥
अपि च ॥ सर्वे ब्रह्म वदन्ति सर्वगतया सर्वं रहस्यं स्फुटं
वेदाभिन्नपदाश्च सौख्यविधये स्मार्त्यश्च काश्चित्क्रियाः ।
विद्वांसोऽपि च वेदबाह्यचरिताः प्राज्ञाः परांच्छासितुं
शूद्राश्चादृतसंयमाः श्रितकलौनीचोऽपि लोकोत्तरः ॥ १३ ॥
परञ्च ॥ वेदान्नधर्मकचविक्रयणं विजाते-
र्वाचान्तथाभ्यसनमाचरितस्य हानम् ।
प्राचां हसः श्वचरितं धुरि पिण्डदस्य
सर्वान्नभुक्तिरिति च द्विजलाञ्छनानि ॥ १४ ॥
किं बहुना ॥ क्व ब्राह्मण्यं क्व प्रमाणं क्व धर्मः
क्वाहो, क्षात्रं क्वास्त्युपाधिः क्व नीतिः ।
क्वास्ते भक्तिः क्व प्रभावः क्व यज्ञः
क्व द्यौः क्वायं कालइत्याहुरार्याः ॥ १५ ॥
नन्वितीदमनुश्रूयते कलिकालविलसितमितिहासेषु । तेनैवाकुलीकृतोऽहमपि सकलाश्च दुर्देशास्साधु समन्वभवम् । तत्किमत्र दोषकथनया ।
प्रत्यक्षितप्रियतमप्रणया विशेषा-
देषा प्रणष्टमसुमाकलयन्त्यशंकम् ।
स्वायंवरेण विधिनैव वरीतुकामा
कामात्परञ्च यतते यदिदं त्ववद्यम् ॥ १६ ॥
यतः ॥ नष्टः प्रव्रजितोऽथवास्तु पतितः पञ्चत्वमाप्तोऽथवा
षण्डत्वं भजतां पतिस्साविदितः स्त्रीणां परं दैवतम् ।
हित्वैनं परसंगतिस्तु महते दोषाय योषाततेः
सोढव्यस्त्वविधिस्तथेति विरहः प्राणावधि व्याधिवत् ॥ १७ ॥
अपि च ॥ पौनर्भवोद्वहननिर्वहणोद्यतानां

निर्वीक्ष्यताञ्च किमिहास्ति वचस्सु निन्द्यम् ।
राण्डेयकुण्डविटगोलककौलटेरा-
श्शब्दाभवंति हि यथार्थतया प्रशंसाः ॥ १८ ॥

किञ्च ॥ पत्यौ मृते पुनरभीकगवेषणीनां
पुत्रोऽपि याति हि तदन्यतया पतित्वम् ।
तस्मात्तथा सति गलन्ति निषेधवाच-
श्शास्त्रेषु मातृगुरुदारगमोद्यतानाम् ॥ १९ ॥

न खल्वियान्कलिकलुषितमनसोऽपि मम मानसोऽपि कोऽपि दोषलेशः ।

**दमयन्ती** — (सवैलक्ष्यस्मितं केशिनीमीक्षते ।)

**केशिनी** — [त] महाराअ, सुणादु से अ णिआणं सविथ्थरम् । असरणीकिदा अ पवहन्तजउणाप्पवाहम्मि व्व कालकालगलनालकालकालम्मि विहावरीवालणिअरम्मि तिमिरम्मि अमाणुससरणसरिसे अवइण्णपंसुपडले आहुविवरसदणिइदे अगणिदवम्मीअचच्चरन्तचच्चुरन्तपिआउसिआउउच्छिअणउलसअपईगोहादिजन्तुजादे अविरदविरुदचिविडिदस्सवणपुडझिल्लीमअल्लिए अस्सन्दवणमज्जारदुन्दअमन्दाअलिअक्खारणारणाडोवजणिदुच्चावऊघोसभीसणकोणन्दराले आअलिउच्छाससिढिलीभवन्त सिलासअलसअन्दरकलिअकुलाअकोसिअकुलघुक्कारपवुद्धगिद्धंगणाकुलाअँवकूइउव्वेइअचुंचुन्दरीचच्चुचुच्चूधणीसमाअण्णणसमासीअन्तसरीसिवसावसुक्कारदारुणे रण्णा जेव्व जिण्णर-

---

[त] महाराज, श्रृणोत्वस्य निदानं सविस्तरं । अशरणीकृता च प्रवहद्यमुनाप्रवाहइव कालकालगलनालकालकाले विभावरीवालनिकरे तिमिरे अमानुषसरणसदृशे अवकीर्णपांसुपटले आखुविवरशतनिचिते अगणितवल्मीकचर्चरच्चंचूर्यमाणपृदाकुरुदाकुवृश्चिकनकुलशतपदीगोधादिजन्तुजाते अविरतविरुतचिपिटितश्रवणपुटझिल्लीमतल्लिके अश्रान्तवनमार्जारद्वन्द्वामन्दाकलिताक्षारणारणाटोपजनितोच्चावचोद्घोषभीषणकोणान्तराले आकलितोच्छ्वासशिथिलीभवच्छिलाशकलशतान्तरकलितकुलायकौशिककुलघूत्कारप्रबुद्धगृध्रांगनाकुलाकंपकूजितोद्वेजितचुचुन्दरीचंचुचुंचूध्वनि समाकर्णनसमासीदत्सरीसृपशापसूत्कारदारुणे राज्ञैव जीर्णारण्यजन्ये शून्यशून्ये जीर्णमण्डपे प्रभु-

ण्णजण्णे सुण्णसुण्णे जिण्णमण्डवे, पउद्धमेत्तेण अन्धआरन्धिददिट्ठिदाए अदंसणिज्जदइआ अमुणिदनाअआणिसंसचरिदा अ अग्गहत्थं पसारिअ परिदो वि परिसरं ण कं पि पेख्खन्दी वज्जहदेव्व विम्हअत्थिमिदा खणं विअ णिच्चेठ्ठं हुविअ परं अज्जउत्त अज्जउत्तत्ति सव्वदो अ अम्मेलअन्ती पच्चुत्तिं ण कं पि लहन्ती तलादु उठ्ठाअ अदिणमिदपुव्वकाअं अग्गपसारिदग्गहत्थदुदअं अस्सुजलद्दिउणिअन्धआरं अहिअदरहिअअवेवहुप्पफ्फुरिदपओहरभरदूणिअविलग्गं अम्मेलिअज्जउत्ताआरत्तत्तसद्दं अएदिदसिलाप्पहारखदणिरग्गलणिग्गलन्तरुहिरसित्तसुउमारचरणदलं अणुग्गहिदखिदितललुढन्तघणकेसवासं अअणिअमज्झमज्झवट्टिसिलत्थम्भदिण्णताडणवेअणं अलक्खिदखण्डिदद्धपडं अदिपरवसमाणसं अत्तादिमेत्तकुउअं अण्णेसिअ वि अहिमण्डवं अदिट्ठूण, अज्जउत्त कहेहि किण्णु तुह ओरद्धं कुदो मं पि विहाअ यादो सि होदु वा ओरद्धं एसा प्पणमम्हि एहि दंसणं देहि पाहित्ति उच्चावअं पलवन्ती वही अ आअच्छन्ती एव्व कस्स वि कालसप्पकलिदरूवन्दरस्स देहिणो विअ दुद्देव्वस्स महन्तकुहरकुहरघेर सरिसे वअणाविवरे ससरणक्कन्दं अव्वो! णिवडिदा।

---

द्धमात्रेणान्धकारान्धितदृष्टितया अदर्शनीयदयिता अज्ञातनायकनृशंसचरिता चाग्रहस्तं प्रसार्य परितोऽपि परिसरं न कमपि पश्यन्ती वज्रहतेव विस्मयास्तिमिता क्षणमिव निश्चेष्टं भूत्वा परमार्यपुत्रार्यपुत्रेति सर्वतश्चाम्रेडयन्ती प्रत्युक्तिं न कामपि लभमाना तलादुत्थायातिनमितपूर्वकायमग्रप्रसारिताग्रहस्तद्वितयमश्रुजलद्विगुणितान्धकारमधिकतरहृदयवेपथुस्फुरितपयोधरभरदूनावलग्नमाम्रेडितार्यपुत्राकारातार्तशब्दमचेतितशिलाप्रहारक्षतनिरर्गलनिर्गलद्रुधिरसिक्तसुकुमारचरणतलमनुद्गृहीतक्षितितललुठद्घनकेशपाशमगणितमध्यमध्यवर्तिशिलास्तम्भदत्तताडनवेदनमलक्षितखण्डितार्धपटमतिपरवशमानसमात्तातिमात्रकुतुकमन्वेष्याप्यधिमण्डपमदृष्ट्वा, आर्यपुत्र, कथय किन्नु तवापराद्धं कुतोमामपि विहाय यातोऽसि भवतु वाऽपराद्धमेषा प्रणमामि एहि दर्शनं देहि पाहीत्युच्चावचं प्रलपन्ती बहिश्चागच्छन्त्येव कस्यापि कालसर्पकलितरूपान्तरस्य देहिनइव दुर्दैवस्य विश्वमपि विश्वं जिघत्सोरिव विवृतवदनविवरस्य विषधरस्य महाकुधरकुहरगृहसदृशे वदनविवरे सशरणाक्रन्दं हन्त! निपतिता ।

**बाहुकः** — (सकरुणं सास्रम् ।) हा धिगस्य नृशंसता हा धिगस्यादुर्दशा । (इति मूर्च्छति ।)

**दमयन्ती** — (स्मृतिमभिनीय ।) [थ] समओ सो वट्टइ व्व एण्हिं ।
(चिन्तामभिनीय सास्रम् ।) हद्धी हा णाह, कहिं गदो सि पिदाऊ हदम्हि परित्ताहि परित्ताहि । (इति निपातनाट्यंती मूर्च्छति ।)

**केशिनी** — (उभौ वीजयन्ती ।) [द] महाराज, किं एदिणा जेव्व मुज्झइ भवं । हला दमअन्ति, कहा विअ खु एदं । समस्ससध समस्ससध । (इत्युत्थापयति ।)

(उभौ — प्रत्यागच्छतः ।)

**केशिनी** — [ध] महाराअ, सुणोदु अवरं अ परं कोवि आऊसेसदाए इमाए अक्कन्दं आअण्णिअ सवरो सरहसं आअमिअ से सप्पबाहं दंसिअ तं छिन्तूण णं विमोइअ णवरि से रुव्वलावण्णसोन्देराइअं अणाहत्तणं अ आलोइअ णं वसीकादुं जदमाणो से बोहणवअणाइं पि अणाअण्णिअ किं पि जिम्हं चिइस्सन्तो रुट्ठाए इमाए खणादु पाइव्वच्चग्गिणेव्व दड्ढो भसिददं णीदो ।

**बाहुकः** — (सानुकम्पम् ।) बतास्य दुर्मतिः यदेपकृतसाह्योऽपि कृतघ्नयैव भस्मसादकारि तपस्वी ।

**दमयन्ती** — (सोपालम्भम् ।) [न] सव्वदो वि पाववुत्ती खु एसा ।
(निश्वसिति ।)

---

[थ] समयस्सवर्तत इवेदानीम् । हा धिक्, हा नाथ, क गतोऽसि, पृदाकुः पृदाकुः हतास्मि परित्रायस्व परित्रायस्व ।

[द] महाराज, किमेतेनैव मुह्यति भवान् । सखि दमयन्ति, कथैव खल्वेतत् । समाश्वसितं समाश्वसितम् ।

[ध] महाराज, श्रृणोत्वपरञ्च परं कोप्यायुश्शेषतयास्याः आक्रन्दमाकर्ण्य शबरस्सरभसमागम्यास्यास्सर्पबाधां दृष्ट्वा तं छित्वैनां विमोच्य परमस्यारूपलावण्यसौन्दर्यादिकमनाथत्वञ्चालोक्यैनां वशीकर्तुम् यतमानोस्याबोधवचनान्यप्यनाकर्ण्य किमपि जिम्हं चिकीर्षन् रुष्टया चानया क्षणात्पातिव्रत्याग्निनैव दग्धोभासिततान्नीतः ।

[न] सर्वतोपि पापवृत्तिः खल्वेषा ।

**केशिनी** — [ प ] णवरि अ कहं पि काए वि पच्चासाए पाणावलिं धारअन्दी इदो तदो अ अण्णिस्सन्ती पन्दरकन्दारूअरमिलन्तगन्धिअ कुलगदिदं णलो णलो त्ति पदं वि णिसमिअ साअरं ता उवसप्पन्ती अदिमलिणतमालसालवीहिअन्धआरिदकुञ्जगम्भगदं अग्गदो पसारिदसाहाजुअं सहआरं वि णिसामिअ सकुऊहलं प्पधाविअ अज्जउत्त अज्जउत्त कुदो एत्थ एक्काइ सि मं पि उज्झिअ त्ति सुदिढं परिस्सजन्ती अहिपहसिअइलतलपडिदपहाअदपरमजोइबिन्दपदारविन्दमुद्दं वि णिज्झाअ णाहस्स त्ति णअणजुअलं अणु समप्पअन्ती समुम्मदपुंस्खोइलकुलकूइदं वि आअण्णिअ सहसा उवसरिअ सुदीहं णसिसन्ती मुहबिंबं पि विहुबिंबम्मि चिउरजालं पि चमरवालम्मि भूवल्लिअं वि भिंगमल्लिअम्मि णअणं पि णलिणम्मि णासंपि वंसम्मि दन्दं पि कुन्दम्मि हसिदं पि कुमुदम्मि अहरं पि किसलम्मि चिवुअं पि त्थवअम्मि बाहं वि साहंमि उरदलं पि दिसदलम्मि रोम्मराइं पि धुम्मराइंमि णाहिअं पि दीहिअम्मि कडितडं पि हरिकडम्मि ऊरुकण्डं पि दुरदसुण्डम्मि जाणुं वि बुब्बुअम्मि गुफ्फं पि जफ्फमि पदं वि पदुमम्मि गदिविहं वि गअगदम्मि अ उप्पेक्खिअ उप्पेक्खिअ अस्सुं

---

[ प ] परञ्च कथमपि प्रत्याशया प्राणावलिं धारयन्तीतस्ततोप्यन्विच्छन्ती प्रान्तरकान्तारोदरमिलद्गंधिककुलगदितं नलोनलइति पदमपि निशम्य सादरन्तानुपसर्पन्ती अतिमलिनतमालसालवीथिकान्धकारितकुञ्जगर्भगतमग्रतः प्रसारितशाखायुगं सहकारमपि निशाम्य सकुतूहलं प्रधाव्यार्यपुत्रार्यपुत्र , कुतोऽत्रैकाक्यसि मामप्युज्झित्वेति सुदृढं परिष्वजमाना , अधिपथसिकतिलतलपतितपथागतपरमयोगिबृन्दपदारविन्दमुद्रामपि निध्याय नाथस्येति नयनयुगलमनु समर्पयन्ती समुन्मदपुंस्कोकिलकुलकूजितमप्याकर्ण्य सहसोपसृत्य सुदीर्घन्निश्वसन्ती मुखबिंबमपि विधुबिंबे चिकुरजालमपि चमरवाले भ्रूवल्लिकामपि भृंगमालिकायां नयनमपि नलिने नासामपि वंशे दन्तमपि कुन्दे हसितमपि कुमुदे अधरमपि किसलये चिबुकमपि स्तबके बाहामपि शाखायामुरस्तलमपि दृषत्तले रोमराजिमपि धूमराजौ नाभिकामपि दीर्घिकायां कटितटमपि हरिकटे ऊरुकाण्डमपि द्विरदशुण्डायां जान्वपि बुद्बुदे गुल्फमपि जल्फे पदमपि पद्मे गतिविधामपि गजगते चोत्प्रेक्ष्योत्प्रेक्ष्याश्रु विस्रंसयन्ती दीर्घदीर्घमुष्णो

विस्संसअन्ती दीह दीहं उह्ण उह्ण अ णीससन्ती किं पि म्हरन्दी मज्झे-पहं जेव्व मुज्झन्ती स्सअं जेव्व अंजेव्व चिरादु समस्ससन्ती सणाहा वि अणाहा सञ्चरन्ती परिसराअदेहिं त्थिमिदणअणगलिदबाहओहेहिं सफ्फकवलकवलणं वि विह्मरन्तेहिं णिच्छलंगेहिं कुरंगेहिं करुणपरि-देवणक्खरणिक्कणाअण्णणपरवसमाणसेहिं प्पलम्बवामलूरुविवरादु प्प-अवेण प्पअसिअ परिच्चत्तेहिं व्व पत्तेहिं सत्तरं उवधावन्तेहिं उवरइ-दकुण्डलेहिं उज्जलफणामणिहिं उवाअण्णणन्दराअसंकाणिरुद्धणी-सासणिच्छलेहिं उवरइदजोअपडबन्धणिहुदेहिं समाहिदेहिं व्व सरी-सवेहिं करिज्जमाणाणुसोअणेव्व कण्डअद्दुमेहिं पि अणाहेत्ति जेव्व विअ किदप्पसहक्कमणकअग्गहणवसणविस्संसणतणुक्खद अहरदंसणसि क्कारवेवहुणीसासआआसकरुणकण्ठकूइदुप्पाअणमिलाणिदाणमोहपरव सत्तणविदरणादिविडविलसिदा कमलबन्धुणा वि अत्तबन्धुजेत्तवित्त-दित्तिदाए व्व कलिदवत्तमिलाणिमालिण्णा धराए वि जाउ इमिआ अत्तणो सवत्तिणी त्तिव्व सामरिसं णिसिदसिलामुहुल्लिहिदमहुरचरण दला प्पदाणणीहिं पि अम्हकेरसंवदं चिरेण अहिहवन्ती लद्धा एक्काइ-णी दिट्ठीए त्ति हिट्ठदाए विअ विआसिदकुसुमणअणाहिं विक्खित्त-प्पदाणपासविदाणविरइदचरणणिअलबन्धं विवुलणिउञ्जघरचारअ-

---

ण्णश्च निश्वसन्ती किमपि स्मरन्ती मध्येपथमेव मुह्यन्ती स्वयमेवाङ्गेव चिरात्समाश्वसन्ती सनाथाऽप्यनाथा सञ्चरन्ती परिसरागतैः स्तिमितनयनगलितबाष्पौघैश्शष्पकबलकबलनमपि विस्मरद्भिर्निश्चलांगैः कुरंगैः करुणपरिदेवनाक्षरनिक्कणाकर्णनपरवशमानसैः प्रलंबवामलूरुविवरात्प्रजवेन प्रकृष्य परित्यक्तैरिव प्राप्तैः सत्वरमुपधावद्भिरुपरचितकुण्डलैरुज्वलफणामणिभिरुपाकर्णनान्तरायशंकानिरुद्धनिश्वासनिश्चलैरुपरचितयोगपटबन्धनिभृतैस्समाहितैरिव सरीसृपैः क्रियमाणानुशोचनेव कण्टकद्रुमैरप्यनाथेत्येवैव कृतप्रसभाक्रमणकचग्रहणवसनविस्रंसनतनुक्षताधरदंशनसीत्कारवेपथुनिश्वासायासकरुणकण्ठकूजितोत्पादनम्लानिदानमोहपारवश्यवितरणादिविटविलसिता कमलबन्धुनाप्यात्मबन्धुजैत्रावितदीप्तितयेव कलितवक्त्रम्लानिमालिन्याधरयापि जात्वियमात्मनस्सपत्नीतीव सामर्षम् निशितशिलामुखोल्लिखितमधुरचरणतला प्रतानिनीभिरप्यस्मदीयसम्पदं चिरेणाभिभवन्ती लब्धैकाकिनी दिष्ट्येति हृष्टतयेव विकासितकुसुमनयनाभिर्वीक्षितप्रतानपाशवितानविरचितचरणनिगलबन्धं विपुलनिकुञ्जगृहचारकनिपातिततनुलता वनस्प-

णिवाडिदणिअतणुलदा वणप्फदीहिं वि अम्हसोहाहरवाहा अ एसेत्ति-ळ्व दिण्ण दिण्णविडवग्गकसाहिघादगलन्तरुहिरपिच्छिलपुट्ठफलआ वादपोदएहिं विअ उच्चावअचेट्ठिदा उम्मत्ता वेअ इमिएत्तिळ्व सावहेलं स हेलं अ उवरि णिक्खित्तकाऊवलपलालपण्णतिणकण्डआदिताडण ळ्वणाकिणगणतिलइदतणू, अतणुणा आहीलेण कहं वि काणणं अतिलंघिअ अलंविदबाहुणा सुबाहुणा किदणीदिभरं चेदिवुरं पविट्ठा से जेळ्व अन्देउरे भसिदपिहिदेळ्व बहप्फाणुतणू सिअदाणिउलिदेळ्व सेळ्वलिणी अविण्णादप्पवुत्ती अंगीकिदसेरंधिवुत्ती वट्टमाणा कहं पि अम्हेहिं अण्णेसिअ आणीदा । तदो पहुदि से विरहकारणा इर कारणा अवण्णणिज्जा अणिळ्वण्णणिज्जा अणाअण्णणिज्जा आआरमेत्तेण अहिण्णाणेण अहिण्णेण महाराएण वेअ आअलणिज्जा । तदो अ अम्हेहिं अब्भत्थिज्जमाणाए अग्गअकुलमोलिहूदं अज्जवण्णादं आअलिदमन्दं अहिप्पेसिअ से वअणणिअरप्पडिवदं महाराअं महाराअस्स तक्कालसंभिदं अणुहावं अ ट्ठाणं अ अज्जउदुवण्णट्ठाणं त्ति सअलं पि अहिगमिअ महाराअस्स आणअणस्स जेळ्व एसि उणो सअंवरो त्ति लेहोवि इमिआए वेअ विलिहिदो । आणीदो अ साहिण्णाणं विण्णादो अ महाराजो वेअ त्ति संवइ अहिकण्णआवरं समाणीदो

---

तिभिरप्यस्मच्छोभाहरबाहा चैषेतीव दत्तदत्तविटपाग्रकशाभिघातगलद्रुधिरपिच्छिलपृष्ठफलका वातपोतकैरपि चोच्चावचचेष्टितोन्मत्तैवेयमितीव सावहेडं सहेलञ्चोपरि निक्षिप्तकाचोपलपलालपर्णतृणकण्टकादिताडनव्रणकिणगणातिलकिततनुरतनुनाऽऽभीलेनकथमपि काननमतिलंघ्यालंभितबाहुना सुबाहुना कृतनीतिभरं चेदिपुरं प्रविष्टास्यैवांतःपुरे पिहितेव बृहद्भानुतनुः सिकतानिचुलितेव शैवलिन्यविज्ञातप्रवृत्तिरंगीकृतसैरंध्रीवृत्तिर्वर्तमाना कथमप्यस्माभिरन्विष्यानीता । ततः प्रभृत्यस्याविरहकारणा किल कारणा अवर्णनीया अनिर्वर्णनीया अनाकर्णनीयाऽऽकारमात्रेणाभिज्ञानेनाभिज्ञेन महाराजेनैवाकलनीया । ततश्चास्माभिरभ्यर्थ्यमानया अग्रजकुलमौलिभूतमार्यपर्णादमाकलितमन्त्रमभिप्रेष्यास्यावचननिकरप्रतिवदम्महाराजम्महाराजस्य तत्कालसम्भृतमनुभावञ्च स्थानञ्चार्यर्तुपर्णास्थानमिति सकलमप्यधिगम्य महाराजस्यानयनायैवैषपुनःस्वयंवर इति लेखोऽप्यनयैव विलिखितः । आनीतश्च साभिज्ञानं विज्ञातश्च महाराजएवेति सं-

अ सुगहीदणामा सव्वहोम्मो । एथ्थ अ सक्खिणीओ सव्वा वि देवदाओ । णवरि महाभाओ महाराओ प्पमाणम् ।

**बाहुकः** — सत्यमखिलमपि, तथापि कथमियमेकपत्नी प्रयोगवर्त्मनाऽपि पुनस्स्वयंवरइति सावित्राय भूपतये लिखितुमप्यधृष्णोदिति गाढसंशयम्मम मनः ।

**केशिनी** — [फ] पेख्खदु भवं जेव्व सुवो सअंवरो सुदूरट्ठले कुहवित्ति अज्ज कहिं णु अदिप्पिअसहस्स लेहो लिहिज्जइ । तं पि विण्णादमहाराअसारच्छकोसलदाए इमाए जेव्व कलिदम् । अध अ कोउणसंसओ ।

**बाहुकः** — (आत्मगतम् ।) यथाचिन्तितमुपनतमपि विपिनपरित्यक्तायाश्शीलमनु मनागिव ससंशयमेव मनः । तत्किमेषकरवै ।

(अधोमुखं चिन्तान्नाटयति ।)

**दमयन्ती** — (उत्थाय बद्धांजलिः ।) [ब]

सक्खिणिओ देवदाओ सवेज्ज तुम्हेहिँ वदध सव्वं पि ।
उज्झिअ दइअं परदो गदम्हि इमिआ णु अख्खमाओअम् ॥२०॥

**बाहुकः** — किमियमात्मशपथपथेन मामपि स्पृशति । आस्तामिदमंगनासाधारणमात्मप्रियतमप्रणयपौरोभाग्यम् । अपि शपथेनामुना किमपि कर्मसाक्षिणीनां देवतानां प्रतिवचोभवितृ श्रृणवानि ?

(इति सकुतुकं दत्तकर्णस्तिष्ठति ।)

(नेपथ्ये — उच्चैः ।) जंपती, श्रूयतामिदमिदं जगत्प्राणवचः ।

भद्रे, तत्र कलिर्निमित्तमनघस्सोयं न वाच्योनलो-

---

प्रत्यधिकन्यकागृहं समानीतश्च सुगृहीतनामा सार्वभौमः । अत्र च साक्षिण्यस्सर्वा अपि देवताः । परम्महाभागोमहाराजः प्रमाणम् ।

[फ] पश्यतु भवानेव श्वः स्वयंवरस्सुदूरस्थले क्वापीत्यद्य क्न्वतिप्रियसखस्य लेखो- लिख्यते । तदपि विज्ञातमहाराजसारथ्यकौशलतयाऽनयैव कलितम् अथ च कः पुनस्संशयः ।

[ब] साक्षिण्योदेवताश्शपेय युष्माभिर्वदत सर्वमपि ।
उज्झित्वा दयितं परतोगतास्मीयन्वक्षमायोगम् ॥*॥

राजन्, विद्धि पतिव्रतेयमतुला स्वप्नेऽप्यनन्याश्रया ।
विस्रब्धं मिलतं युवां सपदि वां सर्ता कलिर्दूरतो-
धर्ताग्नीनपि पुष्करः पुनरपि श्रेयः परं प्राप्स्यथः ॥ २१ ॥

(नेपथ्ये — पुष्पवृष्टिर्मृदंगध्वनिश्च ।)

**बाहुकः** — (सहर्षम् ।) भगवन्नसंशयस्पर्शन स्पर्शन नमस्ते । अनुगृहीतोऽस्मि ।

**दमयन्ती** — [भ] भअवं, बहप्फाणुसह णमो दे । सच्चं सि तुमं जअप्पाणो ।

**बाहुकः** — (सगौरवम् । साञ्जलिबन्धम् ।)

स्कन्धैस्सप्तभिराविशुद्धि विहरन्नाब्धित्रयीमुद्गज-
न्मध्येनाडि चकासदानखशिखं बिभ्रच्च नादान्बहून् ।
आयन्ते विधुमण्डलामृतझरीं सिद्धीश्च साक्षाद्दध-
त्सर्वस्यापि तदस्तु नः स्तुतिपथे स्थाणोररूपं वपुः ॥ २२ ॥

(केशिनीमुद्दिश्य ।) भद्रे, छिन्नसंशयोऽस्मि देवेन मरुता ।

**केशिनी** — (सस्मितम् ।) [म] इदो वा पेक्ख दाव णं णअणेहिं उण्णेहि अ से रणरणअं ।

**दमयन्ती** — [य] हला कहं अलीआणुराइणो विरहुक्कण्ठारासिअत्तणं । (रोदिति ।)

**बाहुकः** — प्रिये, गूढवृत्तितया वैदेशिकतया च न कोऽपि मदुत्कण्ठायासानध्यापितः प्रतिवक्तुमधुना । अंगकालोकनमेवावयोर्मिथः प्रमाणम् ।

**केशिनी** — [र] किं पुव्वचरिदप्पसंसाए । दंसावेदु अज्ज तं अणुराअं अज्जो गेण्हदु अ से करम् ।

---

[भ] भगवन्, बृहद्भानुसख, नमस्ते । सत्यमसि त्वं सकलजगत्प्राणः ।
[म] इतोवा पश्य तावदेनां नयनाभ्यामुन्नय चास्या रणरणकम् ।
[य] हला, कथमलीकानुरागिणोविरहोत्कण्ठारसिकत्वम् ।
[र] किं पूर्वचरितप्रशंसया दर्शयत्वद्य तमनुरागमार्योगृण्हातु चास्याः करम् ।

**बाहुकः** — बाढं प्राक्तनमाकारमनुप्राप्य परमेनामवमृशामि । यदत्र संकुचति हृदयं हस्तश्च ।

**केशिनी** — [ल] को उण तह करणे विलँब्वो ।

**बाहुकः** — अपेक्ष्यते किञ्चिदिवोपकरणं यत्किल दवाद्रक्षितेन दर्वीकरेण प्राभृततया प्रतिपादितमंशुकयुगलम् । यदाच्छाद्य सद्यस्स्वरूपमाप्नुयाम् । मन्दुरास्थं तदुपयुज्य नचिरादध्यास्थानमत्रभवतीमवलोकिष्ये ।

**दमयन्ती** — [व] अवि णाम एदं पि पुव्वं विअ सरसीसरिज्जम् ।

**बाहुकः** — सर्वथा सत्यवाङ्नैषधः ।

**केशिनी** — [श] होदु, चलदु महाराओ, एसा अ सहिं पसाहिअ अट्ठाणं आणेस्सं ।

**बाहुकः** — हुम् । (स्वगतम् ।)

काकतालीयमेवैतत्प्रियया मम संगतिः ।
श्रियोऽप्यजाकृपाणीयं चेत्पणायति पुष्करः ॥ २३ ॥

भवतु भगवान्भवः प्रमाणम् । (प्रकाशम् ।) साधयामस्तावत् । शिवायोन्नमः । (इति निष्क्रान्तास्सर्वे ।)

इति श्री भट्टश्री पण्डितनारायणसुदर्शनीये कलिविधूननाटके प्रकाशोनाम नवमोंकः । शिवाभ्यान्नमः ।

---

अथ दशमोंकः ।

(नेपथ्ये — नायकस्य प्रावेशिकी ध्रुवा गीयते ।)

[ॐ] धुदमलिणकालदंसो धाविदलहुपुक्खरंगसासंसो ।
धारेइ राअहंसो धारं णिअबन्धुदाकिदपसंसो ॥ १ ॥

---

[ल] कः पुनस्तथाकरणे विलंबः ।

[व] अपि नामैतदपि पूर्वमिव सरसीशरीयम् ।

[श] भवतु चलतु महाराजः एषा च सखीं प्रसाध्यास्थानमानेष्यामि ।

[ॐम्] धुतमलिनकालदंशो (दर्शो) धावितलघुपुष्करांग (क)साशंसः ।
धारयति राजहंसो धारां [रं] निजबन्धुताकृतप्रशंसः ॥ * ॥

(ततः प्रविशति सचिन्तं पुष्करः ।)

**पुष्करः** — (दीर्घमुष्णञ्च निश्वस्य ।) अलमनेन राज्येन । यतः ।

साक्षाद्दुह्यंति पौरास्सदनपरिजनास्सावमानाः क्रियायां
सामन्तास्सज्जचापास्सचिवसमुदयस्सर्वमाधात्स्वनिघ्नम् ।
साक्रोशास्सर्वलोकास्सकलमपि गृहं शून्यमासीच्चिराय
स्वाद्यं खाद्यं सुधावद्दुरधिगममथ स्यादमुष्याप्यलाभः ॥ २ ॥

स्थाने हि ॥ न्यायप्राप्तादधति विभवादानभोगादिवृद्धी-
रन्यायाप्तास्त्वनुपदमथाभोगनाशौ भजन्ते ।
काल्यः पूरः प्रथयति पयश्शालिजालानुकूल्या-
न्यन्यश्शालीनुपचितिभृतोऽप्यंबुमग्नान्विधत्ते ॥ ३ ॥

तद्वरममुष्मै प्रत्यर्पणमेव । नन्वधिप्रत्यूषमुत्स्वप्नायमानेन च मया यथा-पुरमग्रजसात्कृतमखिलमपि विभवजातमदर्शि । तदनुगुणमेव पुरोपवन-दुर्गमध्यमध्यासीनोनलोऽपि पुनरप्यक्षदेवनाय मामाह्वयति । तदाप्तोऽस्मि च पादचारेणैव पुरोपवनम् । तद्यावदिदं प्रविशामि ।

(इत्युपवनप्रवेशन्नाटयति । )

(ततः प्रविशति सजानिस्ससुतस्ससूतोनायकः ससावित्रोभीमोविभवतश्च परिवारः ।)

**भीमः** — (ससन्तोषम् ।) अद्यैव निर्वृतमस्माकम्मनः । यतः ।

कलिमपि विधूय कान्तां द्युतिमिव पूर्वां प्रपन्नस्त्वम् ।
विधुरिव तमोविमोक्षाद्विश्वजनीनप्रहर्षाय ॥ ४ ॥

**सावित्रः** — (सभक्तिप्रश्रयम् ।) देव, किमवहेल्यते दुरूहवेषाविप्रल-ब्धातरंगोवैधेयोविधेयः । प्रसीदतु देवः ।

सुखं वा दुःखं वा सदृशमथवाऽऽस्तामसदृशं
समस्तं क्षन्तव्यं चरितमृतुपर्णेऽनधिगतम् ।
शरण्यैस्संरक्ष्याश्शरणमुपयाताहि रिपवो-
ऽप्यबोधप्रक्रान्तान्विदुरिह न मन्तून्नयविदः ॥ ५ ॥ (इति प्रणमति ।)

**नायकः** — (ससम्भ्रमम् ।) सखे, किमिदं ननु भवान्नाम नलदुःखवार्धि-तरणतरणिः । (बाहुभ्यामुत्थाप्य सर्वानुद्दिश्य ।) श्रूयतामार्यमिश्रैः ।

यस्यास्थानसमाश्रयादविदिता वेद्याऽभवन्मे कथा
यन्मैत्री च चिरन्तनी प्रियतमाशाख्याय शालामदात् ।
यत्सारथ्यमभूत्क्षणेन च कलेर्भङ्गाय मह्यः पर-
स्तस्यागस्करतास्मरस्य दुरितं दूरे गिरां दृश्यते ॥ ६ ॥

सत्यमृतुपर्णसाह्येन ऋणवानपि नाम नलः । तदमुष्मै तद्विस्मयप्रेमनिधानमश्वहृदयमर्पयित्वा कथमप्यात्मानमनृणये ।

**सावित्रः** — (सहर्षम् ।) अनुग्रहएवायम् । अवहितोऽस्मि ।

(इति सकुतुकमुत्थायावनतपूर्वकायं तिष्ठति ।)

**नायकः** — बाढम् । (कर्णे एवमिव ।)

**सावित्रः** — (गृहीत्वा सहर्षम् ।) अनुगृहीतोऽस्मि प्रपन्नदयालुना देवेन ।

**सर्वे** — साधु कृतज्ञशेखर साधु । (इति श्लाघन्ते ।)

**पुष्करः** — (निर्वर्ण्य स्वगतम् ।) अये, किमिदं क्षात्रमोजः ।

कालाद्बहोर्विरहितां कलया नियत्याः
कान्तां दधत्सहसुतश्वशुरस्समूतः ।
तिष्ठत्ययम्मम रमारससंग्रहाय
प्राप्तोदयः परइव प्रभया प्रभेशः ॥ ७ ॥

कथमिवैनमव्रीडमविशंकश्च समुपसरामि । (शनैरुपसरति ।)

**भीमः** — (विलोक्य सावज्ञम् ।) पश्यत पद्भ्यामापतन्तमखिलजगतीहृदरुष्करं पुष्करं ।

हंसस्यासनमम्बुजं विधिवशात्प्राप्तोबकोटस्ततः
किं भेत्ता पयसः पयः किमायिता हल्लीकलीलाधुरम् ।
किं नृत्येन्मृदुचंक्रमक्रमलयं किं वा कलं कूजिता
नीरं दूषयिता झषान्व्यथयिता वातेन च छायिता ॥ ८ ॥

(सर्वे — सांसशिरः कम्पं हसन्ति ।)

**पुष्करः** — (अविदितकैनोपसृत्य ।) देव, प्रणमामि । (नायकं प्रणमति ।)

**नायकः** — वत्स, चिरायुर्भूयाः । कमपि कालमिह द्यूतेन विनोदयितु-

मात्मानमिच्छामि । अस्त्वत्र पणः प्रणयिन्याममाभरणजातम् । देव्या दिवैकैव ।

**पुष्करः** — यथाऽभिलषितं भ्रातुः । इदमिदमष्टापदमथवा निखिलाः श्रियः ।

**नायकः** — वत्स, भवतु ताएव प्रतिपणः ।

**पुष्करः** — सिद्धोमे पराजयः । तथाऽपि प्रसह्य दीव्येयम् । (दीव्यति ।)

**नायकः** — मम पाठे । (देवकान्प्रक्षिप्य ।) पश्य जितोऽसि ।

**पुष्करः** — (सदैन्यम् ।) सत्यमात्मीयाः क्रियन्तां यथापुरमखिलाः श्रियः । मम तु भ्रातुरथवा चक्रवर्तिनश्चरणावेव शरणम् ।

(इति शारिफलकमपनीय पादयोः पतति ।)

**नायकः** — (सानुकम्पं बाहू उद्यम्य ।) स्वस्ति वत्साय ।

भ्रातः, पुष्कर, मा शुचः कलिवशादारेचितोऽहं पुरा
व्याजोह्येषदुरोदरं दुरुदरं विश्लेषसंश्लेषयोः ।
अल्पीयानपि तेन मन्तुरिह ते नास्त्येव दत्ताभयो-
ऽस्यद्यैव प्रतिपद्यतां स्वविषयस्तद्भिन्नमस्त्वद्य मे ॥ ९ ॥

(नेपथ्ये — पुष्पवृष्टिर्मृदंगध्वानिश्च ।)

**सर्वे** — साधु भोः प्रपन्नानुकम्पिन् साधु । (नायकं श्लाघन्ते ।)

**वार्ष्णेयः** — आयुष्मन्, सदृशमेवाहितं सार्वभौमस्य । यथा ।

अनुगुणमियदेव भूरिधाम्ना-
मुपकृतिमेव दधत्यपि द्विषद्भ्यः ।
अनुरदमसकृद्दितीर्णदंशा-
ऽप्युपनयति ह्यशनीयमाशु जिह्वा ॥ १० ॥

(नेपथ्ये — सहर्षोल्लासं पौराः ।)

राजन्नद्य विभातमद्य सफलं जन्माद्य सार्थं तपो-
ऽप्यद्यैवाप्रियपुष्करग्रहशमोऽप्यद्यैव नस्सुस्थितिः ।
अद्यैव प्रकृतिं गतानि निषधेष्वंगानि राष्ट्रस्थिते-
रद्यैवात्र यथा पुरं प्रकृतयस्सर्वास्सनाथावयम् ॥ ११ ।

**नायकः** — मय्यनुरागएवैवमिमान्मुखरयति ।

**भीमकः** — क्व नाम सनाम्नैव पुष्करे । (पुष्करः — लज्जते ।)

**नायकः** — अलमतिह्रीणह्रेपणया ।

(पुनर्नेपथ्ये ।) 'भोभोस्सचिवाः, स्वधर्मकर्मनिर्मथितकलिमर्मा धर्मदेवसधर्मा सुधर्मामिव सुनासीरः सपरिवारमास्थानीमापतति सार्वभौमः । तदलंक्रियतामस्य नगरमाखिलमप्यस्य पुनरभिषेकाय । त्वर्यताम् त्वर्यताम् ,।

'भगवन् , सर्वतस्समलंकृतमेव हि नगरम् '।

**नायकः** — (निशम्य सगौरवम् ।) अस्मदागमनप्रहृष्टस्य निखिलमपि नगरमामण्डयितुममात्यानादिशतो भगवतोगौतमस्य निदेशमनु सचिवानामुदितञ्च समुदितमुदितम् ।

**भीमः** — सूत, सह वैनीतकेन रथः ।

**वार्ष्णेयः** — सज्जीकृत्यैव शतांगमापतितोऽस्मि ।

**नायकः** — (नायिकां करेणावलम्ब्य ।) प्रिये, एहि रथमारोहामस्तावत् । (सर्वे — उत्थाय परिक्रामन्नाटयन्ति ।)

**पुष्करः** — (करमवलम्ब्य ।) इतइतस्सार्वभौमः । (मार्गमादर्शयन्नयति ।)

**नायकः** — (रथमवलोक्य सहर्षम् ।) आरोहामः ।

(सहैव पुष्करेण सजानिरथारोहणं नाटयति ।) (सर्वे — रथारोहन्निरूपयन्ति ।)

**भीमः** — सूत, चोद्यन्तामर्वन्तः ।

**वार्ष्णेयः** — यथा देवस्याज्ञा । आवर्जिताअभीशवः ।

(रथवेगन्निरूपयति ।)

**नायकः** — (दमयन्तीं सस्नेहानुरागमवलोकयन् सरोमाञ्चम् ।)

प्रिये, यथापुरम्प्रविशाम पुरम् । पश्यतु प्रिया ।

उत्फुल्ललोचनगलद्घनबाष्पपूर-
रुद्धेक्षणागृहगवाक्षगताः कुमार्यः ।
पश्यन्त्यवीक्षितचरीमिव गात्रवल्लीं
विश्लेषपांडिमविशेषजुषं भवत्याः ॥ १२ ॥

अपिच ॥ दरस्मितमुखांबुजं दधति काश्चिदारार्तिकं
सविभ्रमगतं सुमैरवकिरन्ति काश्चिद्रथम् ।
प्रमोदविवशाः स्थिताः प्रतिकृतिश्रियः काश्चन
सृजन्ति च तथाशिषः प्रवयसश्च काश्चित्पुरः ॥ १३ ॥

**दमयन्ती** — [अ] अज्जउत्त, दिट्ठपुव्वं वि अदिट्ठं विअ एदं णअरं णवं णवं कोदुअं उप्पादेइ। इदोवेअ अम्हणअरसोन्देरं अम्हेहिं आहिगमिज्जइ। (परितः पश्यति।)

**वार्ष्णेयः** — आयुष्मन्, इदमिदमास्थानमवतरत्वायुष्मान्।

**नायकः** — बाढं, प्रिये, एह्यवतरामः।

(नायिकाकरमवलम्ब्यावतारन्नाटयति।)

**पुष्करः** — (अवतीर्य स्तोकमन्तरं परिक्रम्य।) आः पुनरनुविष्टमास्थानं।

(प्रवेशन्नाटयति।)

(नेपथ्ये -- वादित्रध्वनिर्मंगलगीतिश्च।)

**सर्वे** — (प्रविश्य।) शुभमथ निमित्तमपि।

**पुष्करः** — इदमिदमास्थानद्वारम्। प्रविशतु सार्वभौमः।

**नायकः** — (पुरोवलोक्य।) अपीदमेवास्थानमण्डपम्। (प्रविशति।)

(ततः प्रविशति सपूर्णपात्रस्सच्छात्रोगौतमः।)

**गौतमः** — (सहर्षमुच्चैः।) विजयतां विधूतकलिभूमा सार्वभौमः।

(उपायनमुपाहरति।)

**नायकः** — (निर्वर्ण्य।) भगवन्, पश्यच्चरण, नमस्ते।

प्रकामदृढयोगवानपि विसृष्टदुष्टानुगः
सुदर्शनपदं द्विषन्नपि सुदर्शनः पद्यपि।
अकामहृदयोऽपि यः श्रितहरानुकामीनधीः
समे वितरतु प्रियं प्रियगुरुर्मुनिर्गौतमः ॥ १४ ॥ (प्रणमति।)

**गौतमः** — सविशेषपुरुषायुषोभूयाः। (भुजाभ्यामुत्थाप्य।) वत्स, एहि,

---

[अ] आर्यपुत्र, दृष्टपूर्वमप्यदृष्टमिवैतन्नगरं नवं नवं कौतुकमुत्पादयति। इतएवास्मन्नगरसौन्दर्यमस्माभिरधिगम्यते।

चिरविरहखिन्नमिव विगतसंस्कारमासन्नमिदमासनमलंकुरुष्व ।

**नायकः** — यथादिशति गुरुः । (इत्यासनमुपसरन्नेव सप्रश्रयम् । ) भगवन्नयमहमुपविशानि । अर्प्यतामिन्द्रसेनस्यापि यौवराज्यम् । अभिषिच्यताम् ।

**गौतमः** — (सहर्षम् ।) यथाचिन्तितमाह सार्वभौमः । उभयेषामपि युगपदभिषेकायैव निखिलतीर्थपाथःपूर्णमिदममत्रयुगमानैषम् ।

**नायकः** — (सुतमवलम्ब्य सकुमार्या दमयन्त्या सहासने समुपविशति । )

(नेपथ्ये – शंखध्वनिः) (सर्वे — आरोहन्नाटयन्तः परिवारीभवन्ति । )

**गौतमः** — (आरुह्य सहर्षम् कलशं हस्तेन गृण्हन् सभाभिमुखीभूय । )

अद्याहं कलिसंगकल्मषमिव क्षुण्णाल्पवृत्तिक्षण-
मध्मातापयशोविलेपमिव चाप्युन्मार्ष्टुकामः श्रमान् ।
क्षीरैः क्षेत्रसमाहृतैरिह पितापुत्रौ सिषिक्षाम्यहं
सभ्यैस्ससस्पृहसंकथं सममिदं सर्वैरनुज्ञायताम् ॥ १५ ॥

**सर्वे** — (सहर्षोल्लासम् । ) महर्षे, बाढमभिषिच्यताम् ।

**गौतमः** — ओम् । (अक्षिणी निमील्य ध्यानमिव नाटयित्वा ! )

अर्यम्णोऽपि यदान्तरं जगुरजं यद्भूतयोनिं विदु-
र्यत्सार्वज्ञ्यमिहैकमेव दधते यद्वा नमश्शेषिताम् ।
स्त्रीपुंस्क्लीबपरं परात्परतरं पारेतमस्तास्थिव-
त्तज्ज्योतिर्दहरे चकासदनयोर्धत्तां धृतिं शाश्वतीं ॥ १६ ॥

(इति कलशसलिलमावर्जयति । )

(नेपथ्ये — सशंखमृदंगध्वनिर्मंगलगीतिः । )

**गौतमः** — अभिषिक्तस्सार्वभौमोराजा च ।

**सर्वे** — विजयतां विजयाय सार्वभौमोयुवराजश्च ।

(नेपथ्ये पौराः — 'अद्यैवेत्यादि, यथा पुरं पठंति । )

**नायकः** — अहो ! अनुरागः पौराणामभिक्तानां ।

**गौतमः** — सार्वभौम, किं ते भूयः प्रियमुपहरामि ।

**नायकः** — किमस्ति यत्कार्यमितोऽपि ।

